अथ वैपरीत्यं दोषायेति मनसिकृत्य क्वचिददोषतामाह—

**वक्तृवाच्यप्रबन्धानामौचित्येन क्वचित्क्वचित्।**
**रचनावृत्तिवर्णानामन्यथात्वमपीष्यते ॥ २ ॥**

यथा—

'मन्थायस्तार्णवाम्भःप्लुतकुहरचलन्मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः।
कृष्णाक्रोधाग्रदूतः कुरुशतनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽयम् ॥'

अत्र हि न वाच्यमुद्दामं प्रश्नत्वात्। प्रबन्धश्चाभिनेयत्वान्न तथा। किं तु वक्ता भीमसेन इति तदौचित्यादुद्दामा रचनादयः ॥ क्वचिद्वाच्यौचित्या।

यथा—

'शङ्कुव्याकीर्णरङ्कुद्रुतनिशितशरक्षुण्णदीव्यत्तरक्षु
ज्याघोषक्षुब्धकण्ठीरववरचकितव्यस्तमातङ्गयूथम्।
खड्गव्यालूनखड्गं तुमुलकलकलं प्रान्तकूजच्छकुन्तं
भल्लाध्वस्ताच्छभल्लं वनभुवि मृगयाकर्म तेन प्रतेने ॥'

अत्र हि वाच्यस्य सर्वप्राणिविप्लवात्मकमृगयाया एव तथात्वात्तथा। क्वचित्प्रबन्धौचित्यस्य यथा—कादम्बर्यादौ शृङ्गारेऽपि न मसृणवर्णा इति दिक्।

सर्वसाधारणं दोषमाह—

**गृहीतमुक्तको नेष्टो हरचानां विशेषतः।**
**मात्राभेदोऽप्यतः श्लाघ्यः पदे लेष शुभावहः ॥ ३ ॥**

एकस्य पदस्य शेषे यो वर्णः सोऽपरस्याद्ये न दीयते। यथा—नाककला। हकाररेफचकाराणां तु सुतराम्।

---

१. 'क्रोधाग्निदूतः' क. २. 'सुखो' ग. ३. 'न शेषता' ग. ४. 'पदोऽप्येष' ग; 'पदे चैष' घ.

यथा—

'प्रवाहहरिता दूर्वा विहाररसितं तथा ।
स्फुरत्काचचया भूमिर्भूयः पुण्यैरवाप्यते ॥'

मात्राभेदे तु स्वल्पो दोषः । यथा—नाककादम्बिनी । पदे त्वेष न दोषः, किंतु गुणः । यथा—'वन्दामहे महेशानम्' इत्यादौ ॥

अन्यदप्याह—

**रणयोश्च चवर्णस्य शैथिल्यायैव भूरिता ।**

रेफणकारचकाराणां भूयस्त्वं शैथिल्यहेतुतया रसहानिकरमित्यर्थः ।

संधौ वर्णदोषमाह—

**शरहास्तादतिहृद्ये नमशरहाः काट्टकाराच्च ।**
**चछतथशरा नकारादधरा दोषाय भूयसां योगः ॥ ४ ॥**

तात्तकारात् । कात्ककारात् । टाट्टकारात । अधरा अधोवर्तिनः । अतिहृद्ययोः श्रृङ्गारहास्ययो रसयोर्दोषाय भवन्ति । शब्ददोषकष्टस्यान्वयबोधविरोधिता, अस्य तु तस्मिन्नपि रसहानिरिति विशेषः । अनैकान्तिकबाधयोरिवानुमितौ । एतद्भिन्ने तु तदिति रहस्यम् । भूयसां वर्णानां योगः कात्स्र्न्यादिपदे ॥

श्रुतमेवान्यथाकारमक्षराणि कियन्त्यपि ।
काव्यालंकारविद्यायां शौद्धोदनिरसूत्रयत् ॥
उपक्रमो दोषगुणावलंकारोऽथ वर्णकः ।
संप्रदायः कवेस्तस्य सामर्थ्यमथ विश्रमः ॥
अष्टौ रत्नानि दीप्तानि सन्त्यलंकारशेखरे ।
चत्वारः स्युरलंकारे संप्रदाये मरीचयः ।
सामर्थ्ये द्वौ परस्मिंस्तु पञ्चके स्युस्त्रयस्त्रयः ॥
मामकीनां कृतिमिमां द्विषन्तो दूषयन्ति ये ।
काव्यवार्ता न जानन्ति ते नूनं पांसुलाः सुताः ॥

---

१. 'स्फूर्जत्काच' ग. २. 'रसहा' ग.

आस्ते यद्यपि पूर्वपण्डितकृतव्याख्यैव संख्यावता-
मानन्दाय तथापि केशवकवेर्वाचामियं गुम्फना।
संख्यासौष्ठवशब्दलाघवमिथःसंबन्धपूर्वापर-
प्रत्यर्थिप्रतिबन्धनिर्मलगुणः कुत्रान्यतो लभ्यताम्॥

तर्कप्रौढमतिः प्रशस्तकविताबल्लीवसन्तोत्सवः
कोषव्याकरणप्रपञ्चचतुरोऽलंकारपारंगमः।
श्रीमत्केशवमिश्रमद्भुतगुणावासं नियुज्य स्वयं
चक्रे शक्रसमः प्रबन्धमनघं माणिक्यचन्द्रो नृपः॥

इति श्रीमन्महाराजश्रीमाणिक्यचन्द्रकारिते केशवमिश्रकृतेऽलंकारशेखरे विश्रामरत्नमष्टमम्॥

समाप्तश्चायं ग्रन्थः।



काव्यमाला ५२.



श्रीकृष्णकविविरचिता

# मन्दारमरन्दचम्पूः

माधुर्यरञ्जनीव्याख्यया समेता ।



मूल्यं सार्धं रूप्यकः ।

3.00

KÂVYAMÂLÂ. 52.



# THE MANDÂRAMARANDA-CHAMPÛ

OF

## SRÎKṚISHṆA KAVI.

With a commentary.



EDITED BY

PAṆḌIT KEDÂRNÂTHA,

AND

WÂSUDEV LAXMAṆ S'ÂSTRÎ PAṆSÎKAR.

Second Edition.

PUBLISHED

BY

PÂNDURANG JÂWAJÎ,

PROPRIETOR OF THE "NIRNAYA-SÂGAR" PRESS,

Bombay.

1924.

*Price 1½ Rupee.* 5-00

3-00

काव्यमाला ५२.

श्रीकृष्णकविरचिता

# मन्दारमरन्दचम्पूः ।

माधुर्यरञ्जनीव्याख्यया समेता ।

यपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसादतनय-
पण्डितकेदारनाथशर्मणा संपादिता, मुम्बापुरवासि-
पणशीकरोपाह्वविद्वद्वरलक्ष्मणशर्मतनुजनुषा
वासुदेवशर्मणा संशोधिता ।

( द्वितीयावृत्तिः )

सा च
पाण्डुरङ्ग जावजी इत्यनेन
मुम्बय्यां स्वीये निर्णयसागराख्ययन्त्रालये मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीता ।

शाकः १८४६, खिस्ताब्दः १९२४.

मूल्यं सार्धौ [illegible]कः ।

3-00

# मन्दारमरन्दचम्पूस्थविषयाणां सूचीपत्रम् ।

## शुद्धबिन्दुः ।



## रस्यबिन्दुः ।

विषयाः । पृष्ठे ।



**पाकप्रकरणम् ।**



**रूपकभाषानिबन्धनप्रकरणम् ।**



विषयाः । पृष्ठे ।



**काव्यप्रकरणम् ।**



विषयाः । पृष्ठे ।



**वर्ण्यावर्ण्यप्रकरणम् ।**

## श्रीकृष्णकविविरचिता

## मन्दारमरन्दचम्पूः[1] ।

माधुर्यरञ्जनीव्याख्यया सहिता ।

### १. वृत्तविन्दुः ।

कमलनयनकेलीसंभ्रमस्रस्तनीवि-
स्फुटजघनविराजत्किंकिणीजालकाञ्ची ।
कलयतु कमलाक्ष्या राधिकायाः प्रमोदं
मदनविजययात्रावीथिकातोरणश्रीः ॥ १ ॥

---

परात्मपादपाथोजपरागपरमाणवे ।
नमः श्रीकान्तसीमन्तसारसिन्दूरविन्दवे ॥
मन्दारमकरन्दाख्यचन्द्रदेवकृतेः शुभाम् ।
टीकां शीघ्रेण बोधाय कुर्वे माधुर्यरञ्जनीम् ॥

---

निष्प्रत्यूहसमाप्तये चिकीर्षितस्येष्टदेवतां ध्यायति—**कमलनयनेति** । कमलनयनस्य कृष्णस्य केलीसंभ्रमे स्रस्ता नीविर्यस्मात्तत् । अत एव स्फुटं दृश्यं जघनं तस्मिन्विराजत्किंकिणीनां नूपुराणां जालविशिष्टा काञ्ची कर्त्री । अत एव मदनस्य विजययात्रायां वीथिकायां स्थितस्य तोरणस्य श्रीरिव श्रीर्यस्याः सेति काञ्चीविशेषणम् । कमलाक्ष्या राधिकाया इत्यस्य काञ्च्यामन्वयः । प्रमोदं कलयतु करोतु । लोट् । अत्रोपमानोत्प्रेक्षयोः संदेहसंकरः। नीविरिदन्तोऽपि । यदाह माघः—'नीविभिः सपदि बन्धनमोक्षः' इति । मालिनी वृत्तम् 'ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षणात् । आदौ कवर्णप्रयोगाल्लक्ष्मीश्च । यदाह भामहः—'कः खो गो घश्च लक्ष्मीम्' इति । नगणप्रयोगात्सौख्यं च । यदुक्तं कालिदासेन—'नो नाकः सुखमच्युतं प्रकुरुते' इति । अत्र कृष्णेन सह क्रीडासक्तराधिकाकाञ्चीप्रार्थनेन केलीसुखितहृदयराधाकृष्णध्यानं कृतं भवतीति वस्तुना व-

---

१. अस्याश्च चम्प्वाष्टीकायाश्च पुस्तकमेकैकं वङ्गलूरनगरवास्तव्यपण्डितवर्यश्रीयुतकुण्डलगिर्याचार्यैः काव्यमालार्थं प्रेषितमिति तेषामुपकारं सधन्यवादं प्रकाशयामः.

पुरुषकरणवेगप्रश्लथत्केशपाशा-
त्प्रपतदमलमल्लीसंतती राधिकायाः।
मुरहरहृदि जीयान्नैजसंग्रामतुष्ट-
स्मरनृपकृतपुष्पस्तोमवृष्टिस्फुरच्छ्रीः॥ २॥
कमलजभवकान्ताप्रेमपीयूषधारा-
कलितकनककुम्भः कुत्सवंशैकडिम्भः।
कलयति किल गोपीकामकेलीकलाप-
प्रणयिचरणचित्तः कोऽपि चम्पूममत्तः॥ ३॥
न वेदान्ते प्रज्ञा न च परिचयः पाणिनिमते
न वालंकारादौ न च चतुरता गौतममते।

---

स्तुध्वनिः॥ १॥ **पुरुषेति**। राधिकायाः पुरुषकरणे पुरुषायिते यो वेगस्तेन हेतुना प्रश्लथतः केशपाशान्मुरहरस्य कृष्णस्य हृदि प्रपतन्ती अमलानां मल्लीनां संततिः। अत एव नैजे संग्रामे तुष्टेन स्मरनृपेण कृता पुष्पस्तोमवृष्टिरिव स्फुरन्ती श्रीर्यस्याः सेत्युत्प्रेक्षा। इदं संततिविशेषणम्। जीयात्। 'जि जये' आशिषि लिङ्। अनेन पद्यद्वयेन सुखितहृदयस्यैव ध्यानं सर्वाभीष्टप्रदमिति सूचितम्। ननु ध्यानरूपमङ्गलस्यात्मवृत्तित्वेन आकाशस्थशब्दध्वंसरूपसमाप्तिकारणत्वं कथमिति चेदुच्यते। वर्णात्मकशब्दनाशस्य देहावच्छेदेन जायमानत्वात् ध्यानस्यापीति न वैयधिकरण्यम्। अत्र ध्यानं च स्वप्रीत्युत्पादकमानसव्यापारविशेषः। न तूत्कृष्टत्वप्रकारकं ज्ञानम्। अत एव राजादिप्रत्यक्षावसरे राजानं ध्यायतीति न प्रयोगः। इदं तु बोध्यम्। मङ्गलं तावत्त्रिविधम्—कायिकवाचिकमानसिकभेदात्। कायिकं च दण्डाकारेण प्रणिपातादिरूपव्यापारविशेषः। वाचिकं चोत्कृष्टत्वप्रकारकज्ञानजनकशब्दः। मानसिकं तु ध्यानमेव। कायिकवाचिकस्थलयोर्मङ्गलसमाप्त्योरवच्छेदकत्वसंबन्धेन सामानाधिकरण्यम्। मानसिकस्थले स्वप्रतियोग्यनुकूलव्यापाराश्रयत्वेन संबन्धेन समाप्तिं प्रत्युपरञ्जनसंबन्धेन मङ्गलस्य कारणत्वोक्त्या सामानाधिकरण्यं संगच्छते। न च—ज्ञानस्य क्षणिकत्वेन कालान्तरीयसमाप्तिकारणत्वं न संजाघटीति—इति वाच्यम्। स्वजन्यविघ्नध्वंसवत्त्वसंबन्धेन तत्कालेऽपि मङ्गलस्य सत्त्वात्। विघ्नत्वं चोद्दिष्टकार्यप्रतिबन्धकदुरदृष्टविशेषत्वम्। इत्थं च समाप्तौ मङ्गलस्य करणत्वं विघ्नध्वंसस्य व्यापारत्वं चोक्तमिति दिक्॥ २॥ **कमलजेति**। कमलजभवस्य पद्मजस्य कान्तायाः शारदायाः प्रेमैव पीयूषस्तस्य धाराभिः कलितः पूर्णश्चासौ कनककुम्भश्चेति रूपकम्। गोपीभिः सह कामकेलीकलापे प्रणयिनः कृष्णस्य चरणयोश्चित्तं यस्य तथोक्तः। तथाप्यमत्तो विनीत इत्यर्थः। अत एव कुत्सवंशस्य एकडिम्भो मुख्यपुत्रः। एतादृशगुणयुक्तत्वाद्वंशोत्तंस इति भावः। कोऽपि कश्चन कविश्चम्पूं कलयति। किलेति युक्तार्थे। अत्रापि मालिनी वृत्तम्॥ ३॥ **न वेदान्त इति**। वेदानामन्तो निर्णयो यस्मात्तस्मिन् शास्त्रे

तथाप्याचार्यश्रीगुणगणकथावर्णनपरे
मयि प्रेम प्राज्ञाः कुरुत कविकीर्त्यैककमने ॥ ४ ॥

मनोहृद्यगद्यानवद्योरुपद्यं प्रबन्धं रसज्ञा यदि स्युर्भजेयुः ।
न चेत्ते त्यजेयुः पुरंध्रीकदम्बं युवानो भजेयुस्तदन्ये त्यजेयुः ॥ ५ ॥

किरति मधु सुधीसत्कर्णपालीषु वाणी
मम किमरसिकानां भूषणे दूषणे वा ।
सुखयति सुमुखीनां सारशृङ्गारलीला
तरुणमिह शिशूनामादरेऽनादरे किम् ॥ ६ ॥

---

न प्रज्ञा प्रकर्षेण ज्ञानं नास्तीत्यर्थः । पाणिनिमते व्याकरणे न परिचयश्च । अलंकारादौ वा न । परिचयो नास्तीत्यर्थः । गौतममते न्याये न च चतुरता चातुर्यमपि नास्तीत्यर्थः । तथाप्येतादृशग्रन्थकरणहेत्वभावेऽप्याचार्यस्य श्रीमदाचार्यस्य विष्णोर्वा गुणगणकथाया वर्णने परे आसक्ते कवीनां कीर्त्यैककमने कीर्त्यैककामुके मयि हे प्राज्ञाः, प्रकर्षेण जानन्तीति प्राज्ञा विद्वांसः प्रेम कुरुतेति प्रार्थनायां लोट् । यद्वा न वेदान्ते प्रज्ञेत्यादिः काकुः । 'बोद्धारो मत्सरग्रस्ताः' इति लोकप्रसिद्धेस्तथापीत्युक्तम् । आचार्यश्रीगुणगणकथावर्णनपरे इति विशेषणं हेतुगर्भम् । तथा चेदृशशास्त्राभ्यासिनि मयि आचार्यगुणगणकथावर्णनपरत्वसत्त्वात्तदृष्ट्वा मात्सर्यमुत्सार्य प्रेम कुरुतेति प्रार्थना । एतेन कुत्रचिदपि शास्त्रेऽनभिज्ञस्य ग्रन्थकर्तृत्वं कथं घटते इति शङ्का परास्ता । शिखरिणी वृत्तम् । 'रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी' इति लक्षणात् ॥ ४ ॥ अथेमां मदीयप्रार्थनामनादृत्य मयि मत्सरिणश्चेन्न काप्यस्माकं क्षतिरित्याशयं पद्यद्वये स्फुटयति—**मनोहृद्येति** । रसान् शृङ्गारादीन् जानन्तीति रसज्ञा यदि स्युस्तर्हि मनोहृद्यैर्गद्यैरनवद्यैः उरुभिरुत्कृष्टैः पद्यैर्युक्तं प्रबन्धं प्रकर्षेण बध्यते कविनेति प्रबन्धो वर्णसमुदायात्मकग्रन्थः तं भजेयुः । 'भज सेवायाम्' । लिङ् । ते रसज्ञा न चेत्प्रबन्धमित्यनुषङ्गः । त्यजेयुः । 'त्यज हानौ' । संभावनायां लिङ् । पुरंध्रीणां सुचरित्राणां कदम्बं युवानश्चेद्भजेयुः । तदन्ये युवभिन्ना वृद्धास्त्यजेयुः । 'वृद्धानां तरुणी विषम्' इति प्रसिद्धेः । अत्र रसज्ञारसज्ञकर्तृकप्रबन्धकर्मकभजनत्यागरूपोपमेयार्थस्य तरुणातरुणकर्तृककान्ताकर्मकभजनत्यागरूपोपमानार्थस्य च पृथग्वाक्यद्वये निर्देशात्प्रतिवस्तूपमालंकारः ॥ ५ ॥ **किरतीति** । मम वाणी सुधियां शोभना धीर्येषां तेषामित्यर्थः । बुद्धौ शोभनत्वं च परश्रेयोविषयीकरणजन्यसुखसामानाधिकरण्यम् । सत्कर्णपालीषु श्रोत्रप्रदेशेषु मधु किरति क्षिपति । लट् । अरसिकानां कर्तरि षष्ठी । दूषणे भूषणे वेति विकल्पे । किं न किमपि । दूषणे कृते सति नानन्दः भूषणे कृते सति न व्यसनमिति भावः । सुमुखीनां सुन्दरीणां सारा श्रेष्ठा शृङ्गारलीला

चम्पूप्रबन्धे मन्दारमरन्दाख्ये कृतौ मम ।
वृत्तसारश्लिष्टचित्रबन्धगुप्ताः सनर्तनाः ॥ ७ ॥
शुद्धरम्यव्यङ्ग्यशेषा इत्येकादशबिन्दवः ।
तत्रादिमे वृत्तबिन्दौ वृत्तलक्षणमुच्यते ॥ ८ ॥
छन्दसा ग्रथितः शब्दः पाद इत्यभिधीयते ।
मिलितांश्चतुरः पादान्वृत्तमूचुर्विपश्चितः ॥ ९ ॥

---

तरुणं सुखयति इह शृङ्गारलीलाविषये शिशूनां कर्तरि षष्ठी । आदरे अनादरे कृते सति किम् । अत्र भिन्नवाक्यार्थधर्मयोर्बिम्बप्रतिबिम्बभावेन निर्देशाद्दृष्टान्तालंकारः । पूर्वपद्यं तु समत्सरविद्वदभिप्रायकम् । इदं तु समत्सरमूढाभिप्रायकमिति विशेषः ॥ ६ ॥ ग्रन्थरीतिमुद्दिशति—**चम्पूप्रबन्ध इति** । मन्दारमरन्दाख्ये चम्पूप्रबन्धे मम कृतावेकादशबिन्दवः कियन्त इति शेषः । ते च (१) वृत्तबिन्दुः, (२) सारबिन्दुः, (३) श्लिष्टबिन्दुः, (४) चित्रबिन्दुः, (५) बन्धबिन्दुः, (६) गुप्तबिन्दुः, (७) नर्तनबिन्दुः, (८) शुद्धबिन्दुः, (९) रम्यबिन्दुः, (१०) व्यङ्ग्यबिन्दुः । (११) शेषबिन्दुः । मकरन्दपक्षे वृत्तबिन्दुर्वर्तुलबिन्दुः । सारः श्रेष्ठः । श्लिष्टः परागादिसंबन्धः । चित्रः चित्रवर्णयुक्तः । बन्धबिन्दुर्बन्धनयुक्तबिन्दुः घनीभूतबिन्दुरित्यर्थः । गुप्तो गोपनविशिष्टः । नर्तनः 'नृती गात्रविक्षेपे' इत्यस्मादधिकरणे ल्युट् । चलनाश्रय इत्यर्थः । शुद्धः शुद्धिमान् । रम्यो रमणीयः । व्यङ्ग्यः व्यज्यते स्फुटीक्रियते रस इति व्यङ्ग्यः । शेषोऽवशिष्टः । तत्रैतेषु बिन्दुषु आदिमे आद्ये वृत्तबिन्दौ वृत्तानां लक्षणं समूहाभिप्रायेणैकवचनम् । उच्यते । 'ब्रूञ् व्यक्तायां वाचि' इत्यस्मात्कर्मणि यक् लट् ॥ ७ ॥ ८ ॥ **छन्दसेति** । छन्दस्त्वं च षड्विंशतिवर्णाधिकवर्णनात्मकत्वे सति वर्णात्मकत्वम् । ध्वन्यात्मकशब्दवारणाय विशेष्यदलम् । गद्यादिवारणाय सत्यन्तम् । छन्दसा ग्रथितो बद्धः । छन्दोरूपेण निरूपित इत्यर्थः । शब्दपदं स्वरूपकथनार्थं न तु लक्षणप्रविष्टं प्रयोजनाभावात् । किं तु छन्दोरूपत्वं लक्षणम् । इत्थं च 'आङ् ईषदर्थे' इति कोशेनाग्रथित इत्यस्य ईषद्ग्रथितार्थलाभेन सकृदुच्चरिततात्पर्यविषयच्छन्दोरूपत्वमिति निष्कर्षः । वृत्तवारणाय सकृदुच्चरितत्वं छन्दोविशेषणम् । एकद्व्यादिवर्णघटितपादचतुष्टयात्मकवृत्तवारणाय तात्पर्यविषयत्वं च छन्दोविशेषणम् । इदमत्रावगन्तव्यम् । एकद्व्यादिवर्णघटितपादचतुष्टयात्मकवृत्ते वक्तुः श्रोतुर्वा पादत्वेन तात्पर्ये सति पाद एव । वृत्तत्वेन तात्पर्ये सति वृत्तमेव । एतदेकाक्षरमारभ्य चतुर्विंशतिवर्णपर्यन्तवर्णघटितवाक्य एव । पञ्चविंशतिषड्विंशतिवर्णात्मकवाक्ये पादत्वमेव । तत ऊर्ध्वं तु न पादत्वम् । एकाक्षरमारभ्य षड्विंशत्यक्षरपर्यन्तमेकैकवर्णाधिक्येनोत्तरोत्तरं षड्विंशतिछन्दांसीति पिङ्गलादिभिः परिगणनात् । इदं वर्णच्छन्दस्येव । मात्राछन्दोनिरूपणं त्वग्रे भविष्यति । मिलितान् चतुरः पादान् विपश्चितो विद्वांसः वृत्तमूचुः । पादचतुष्टया-

सममर्धसमं चैव विषमं चेति तत्त्रिधा ।
यस्मिन्पादाश्च चत्वारः समाः स्युस्तत्समं मतम् ॥ १० ॥
समौ समौ च विषमौ समावर्धसमं यदि ।
भिन्नलक्ष्माङ्घ्रयो यस्मिंश्चत्वारो विषमं हि तत् ॥ ११ ॥
छन्दांसि वेदे ख्यातानि सप्तपूर्वाण्यनुष्टुभः ।
लोकप्रसिद्धान्यवृत्तलक्षणोदाहृती ब्रुवे ॥ १२ ॥
**शार्दूलविक्रीडितं तु यत्र मः सजसाः पुनः ।**
**ततगाः सूर्यऋषिभिर्विरतिस्तत्र कीर्तितम् ॥**

यथा—अथ कदाचित्

भूमीलोकदिदृक्षया दयितयाभीक्ष्णं समभ्यर्थितो
गन्धर्वः कलगीतिनामकलितः सार्कं तया कान्तया ।

---

निवेशेन वृत्तान्तरेषु मादिगणानां व्यवधानेन वृत्तित्वेऽपि न क्षतिः । अव्यवहितोत्तरत्वा-त्मकत्वं वृत्तत्वम् । इदमुभयच्छन्दः साधारणम् ॥ ९ ॥ तं विभजते—**सममिति ।** यस्मिन्नित्यत्र सप्तम्या घटकत्वमर्थः । तस्य पादेष्वन्वयः । तथा च परस्परसदृशपाद-चतुष्टयघटितत्वं समवृत्तलक्षणम् । परस्परसदृशविषमपादद्वयसदृशपरस्परसदृशसमपादद्व-यघटितत्वं वा ॥१०॥ **समाविति ।** विषमौ सदृशौ समौ च सदृशौ चेदर्धसमवृत्तमि-त्यर्थः । तथा च परस्परसदृशविषमपादद्वयासदृशपरस्परसदृशसमपादद्वयघटितत्वं लक्षणं पर्यवसितम् । यस्मिन् भिन्नानि भिन्नानि लक्ष्माणि येषां तेऽङ्घ्रयश्चत्वारो वर्तन्ते तद्विष-मवृत्तमित्यर्थः । अत्रापि परस्परासदृशपादचतुष्टयघटितत्वं लक्षणं बोध्यम् । यद्वा परस्प-रासदृशविषमपादद्वयासदृशपरस्परासदृशसमपादद्वयघटितत्वम् । सादृश्यं च स्वघटकगुरु-लघुतदुभयान्यतमवर्णगतसंख्याक्रमोभयविशिष्टवर्णमात्रघटितत्वेन । स्वपरं सादृश्यप्रति-योगिपरम् ॥११॥ उक्था(कथा)दिसप्तछन्दःसु वृत्तानामनुक्त्यापि न न्यूनतेत्याशयेनाह—**छन्दांसीति ।** तथा च तेषां वेदमात्रप्रसिद्धत्वेन लोकप्रसिद्ध्यभावान्न कृतं लक्षणल-क्ष्यवर्णनमित्यर्थः । लोके आलंकारिकजने प्रसिद्धानामन्येषां वृत्तानां लक्षणोदाहृती ल-क्षणोदाहरणे ब्रुवे । लट् ॥ १२ ॥ तत्रादावुद्देशक्रमानुसारेण समवृत्तलक्षणानि विवक्षुः शार्दूलविक्रीडितं लक्षयति—**शार्दूलविक्रीडितमिति ।** यत्र वाक्ये मः मगणः स-जसाः सगणजगणसगणाः ततगाः तगणतगणगुरवः । पुनः किं च सूर्यैर्द्वादशभिरक्षरैः ऋषिभिः सप्ताक्षरैर्विरतिः विश्रामः । एते वर्तन्ते तद्वृत्तं शार्दूलविक्रीडितमित्यन्वयः । तथा च मगणाव्यवहितोत्तरसगणाव्यवहितोत्तरजगणाव्यवहितोत्तरसगणाव्यवहितोत्तरत-गणाव्यवहितोत्तरतगणाव्यवहितोत्तरगुरुघटितत्वं लक्षणं भवति । एतेनाव्यवहितोत्तरत्व-

आरुह्योरुविमानमाशु गगने गच्छन्प्रपश्यन्भुवं
तत्रैकां नगरीं विलोक्य ललनामित्यब्रवीत्सादरम् ॥ १३ ॥
अस्ति पुरः पश्य प्रशस्तविभवैः समस्तलोकसुखकरी रजतपीठपुरी ।
वसन्ततिलका प्रोक्ता तभजा जगगा यदि ।
न वा पादेऽपि विरतिः सप्तसप्ताक्षरैर्मता ॥
सोसूच्यते जिगमिषां नु पुलोमपुत्री-
केलीषु लोलमनसो नगरीं विजेतुम् ।
शुभ्रांशुबिम्बपरिचुम्बनढौकमान-
राराज्यमानवरराजतसौधशृङ्गा ॥ १४ ॥

---

च स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणस्वाधिकरणक्षणध्वंसाधिकरणक्षणवृत्तिलम् । सूर्यऋषिभिर्यतिकथनं तु आलंकारिकाः सहृदयहृदयाह्लादकारित्वाद्यतिमङ्गीकुर्वन्तीति सूचनार्थम् । अत एव शेषबिन्दौ 'पादान्ते एव केचिच्च पादमध्येऽपि केचन । यतिं वदन्ति' इति स्वयमेव वक्ष्यति । केचिद्वेदान्तिनः । पादान्त एवेत्यनेन न पादमध्ये यतिं नियमेनाङ्गीकुर्वन्तीत्यर्थः । न तु सूर्यऋषिभिर्यतिमत्त्वं लक्षणप्रविष्टम् । अन्यथा तेनैव निर्वाहे मादिगणघटितत्वं व्यर्थं स्यात् । यदि वृत्तान्तरवारणाय मादिगणघटितत्वमित्युच्यते । तदा अतिधृतिछन्दः प्रोद्भूतवृत्त एवातिव्याप्तिर्वाच्या । तत्र भगवता सूत्रकारेण काश्यपेन रामकीर्तिना गोमानसेन केदारेणापि न किमपि वृत्तमेतद्भिन्नं सूर्यऋषिमात्रयतिमत्त्वेन प्रतिपादितम् । यत्तु प्रस्ताररीत्या प्रक्रान्ते सरसतापादनाय सूर्यऋषिभिरङ्गीकृतयतिमति कस्मिंश्चिद्वृत्तेऽतिव्याप्तिवारणायेति चेत्तर्हि अनेनैव मादिगणगुरुघटितत्वमात्रेण सामञ्जस्ये तस्य वैयर्थ्यम् । एवमग्रेऽपि । यतिगणादिनिरूपणं स्वयमेवाग्रे वक्ष्यति । तदुदाहरति—**यथेत्यादिना** । कलगीत इति नाम्ना कलितो युक्तो गन्धर्वः दयितया भूमीलोकस्य दिदृक्षया द्रष्टुमिच्छया । हेताविति तृतीया । अभीक्ष्णमसकृत् समभ्यर्थितः सन् तया कान्तया साकं विमानमारुह्य आशु गगने गच्छन् भुवं लोकं पश्यन् तत्र भुवि एकां नगरीं विलोक्य ललनां कान्तामिति वक्ष्यमाणं सादरं यथा तथाब्रवीत् । भूमिरीदन्तोऽपि । यदाह भानुकविः—'निःशेषभूमीधर—' इति रसतरङ्गिण्याम् ॥ १३ ॥ **अस्तीति** । प्रशस्तैर्विभवैः समस्तस्य लोकस्य सुखकरी रजतपीठपुरी अस्ति । पुरः पश्येत्यन्वयः ॥ **वसन्ततिलकेति** । तभजा तगणभगणजगणाः जगगाः जगणगुरुगुरवः यदि वाक्ये सन्ति चेत् । अपि सप्तभिः सप्तभिरक्षरैर्विरतिर्विश्रामः । वेति विकल्पेनेति मता । इदं वसन्ततिलकावृत्तं सिंहोद्धतानामकमाह काश्यपः । मधुमाधवीमाह गोमानसः चेतोहितामाह रामकीर्तिः ॥ **सोसूच्यत इति** ।

**वंशस्थं स्याज्जतजरा गुहास्यऋतुभिर्यतिः ।**

परिस्फुरत्स्फाटिकसालमण्डलप्रगल्भवल्गत्प्रतिबिम्बबन्धुरा ।
तितंसति क्षीरपयोधिबन्धुतां किलोच्चलन्त्यत्परिखाजलावली ॥ १५

**वातोर्मी मभता गौ च श्रुतिसप्तयतिर्भवेत् ॥**

पद्मान्येतत्परिखासंभवानि वीचीजालैर्मृदुलं संचलन्ति ।
मन्ये नूनं फणिनां कन्यकानां नीरक्रीडानिरतानां मुखानि ॥ १६

**इन्द्रवज्रा ततजगा गो हरास्यर्तुभिर्यतिः ।**

---

शुभ्रांशोश्चन्द्रस्य बिम्बस्य परिचुम्बनाय ढौकमानानि । 'ढौकृ गतौ' इत्यस्माच्छानच् । राराज्यमानानि भृशं प्रकाशमानानि । 'राजृ दीप्तौ' इत्यस्माद्यङन्ताच्छानच् । वराणि राजतानि रूप्यमयानि सौधशृङ्गाणि हर्म्याग्राणि यस्यां सा या रजतपीठपुरी । पुलोमपुत्र्याः शच्याः केलीषु लोलमनसः आसक्तचित्तस्य । इन्द्रस्येति यावत् । नगरीममरावतीं विजेतुं जिगमिषां गमनेच्छाम् । 'इण् गतौ' इत्यस्मात्सन्नन्ताद्भावे अप्रत्ययः । सोसूच्यते पुनः पुनरतिशयेन वा सूचयति । 'सूच पैशून्ये' इत्यस्मात् 'सूचिसूत्र्यत्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः' इति वार्तिकानुसारेण यङि 'सन्यङो' इति यङन्तप्रथमैकाचो द्वित्वे 'गुणो यङ्लुकोः' इत्यभ्यासगुणे सोसूच्यत इति रूपम् । नु इत्युत्प्रेक्षायाम् । अत्रातिशयोक्त्युत्प्रेक्षयोरङ्गाङ्गिभावसंकरः ॥१४॥ **वंशस्थमिति** । जतजरा जगणतगणजगणरगणाः । गुहास्यैः षड्भिः ऋतुभिः षड्भिः । अत्रापि नवेत्यनुज्यते ॥ **परिस्फुरदिति** । परिस्फुरत्प्रकाशमानं स्फाटिकं स्फटिकमयं सालस्य प्राकारस्य मण्डलं तस्य प्रगल्भं वल्गत्प्रतिबिम्बं तेन बन्धुरा निबिडीकृता । व्याप्तेति यावत् । उच्चलन्ती यस्याः पुर्याः परिखायां स्थितानां जलानामावली । क्षीरपयोधेर्बन्धुतां साम्यम् । 'बन्धुश्चौरः सुहृद्वादी कल्पः प्रख्यः प्रभः समः । देशीयदेश्यरिप्वाभसोदराद्या इवार्थकाः ॥' इति देवेश्वरः । तितंसति तनितुमिच्छति । 'तनु विस्तारे' इत्यस्मात्सन्नन्तात्कर्तरि लट् । किलेत्युत्प्रेक्षायाम् ॥१५॥ **वातोर्मीति** । मभता मगणभगणतगणाः । गौ च गुरुद्वयं च । श्रुतिसप्तभिश्चतुर्भिः सप्तभिश्च वर्णैर्यतिश्चेद्वातोर्मी नाम वृत्तं भवेत् ॥ **पद्मानीति** । एतस्याः पुरः परिखासंभवानि । वीचीनां तरङ्गाणां जालैश्चयैः । मृदुलं यथा तथा संचलन्ति पद्मानि । फणिनां सर्पाणां नीरक्रीडायां जलक्रीडायां निरतानां कन्यकानां मुखानि मन्ये इत्युत्प्रेक्षा । अत्र पादान्तस्थस्य वैकल्पिकगुरुत्वान्न छन्दोभङ्गः ॥ १६ ॥ **इन्द्रवज्रेति** । ततजगास्तगणतगणजगणगुरवः । गः गुरुः । हरास्यैः पञ्चभिः ऋतुभिः षड्भि-

(प्रपां निर्दिश्य ।)

सा निर्जनायां विहिता प्रपायां कान्ता कुचान्तं परिदर्शयन्ती ।
पान्थस्य यूनः कुरुते करेऽम्भोधारां मुखे सामिदृगन्तरीतिम् ॥ १७

उपेन्द्रवज्रा जतजा गौ बाणऋतुभिर्यतिः ॥

इयं कुरङ्गीनयनाम्रशाखां विभाति वामेन करेण धृत्वा ।
पदान्तलालम्बितवेणिवल्ली मनोऽस्य चाक्रष्टुमिवानताङ्गी ॥ १८ ॥

मिश्रा तूपेन्द्रमाला स्यादुपजातिं च तां विदुः ।

यथा यथा पश्यति तन्मुखेन्दुं पातुं प्रवृत्तो विरलाङ्गुलिः सन् ।
तथा तथा प्रेमरसेन साकं सव्रीडहासा तनुतेऽम्बुधाराम् ॥ १९ ॥

शालिनी मतता गौ च यतिः श्रुतितुरङ्गमैः ॥

धन्येयं यत्कामिनी पान्थयूनः पीयूषाभैरम्बुभिः शीतशीतैः ।
सप्रेमोत्थैः सामिनेत्रान्तपातैः प्रीतिं पुष्णात्युच्चलद्भ्रूविलासैः ॥ २० ॥

---

यतिः। अत्रापि मण्डूकप्लुत्या नवेत्यन्वेति ॥ **सेति** । पुरतो दृश्यमानेत्यर्थः । निर्जनायां जनरहितायां प्रपायां पानीयशालायां विहिता स्थिता सा कान्ता कुचान्तं स्तनाग्रं परिदर्शयन्ती सती यूनस्तरुणस्य पान्थस्य करे हस्ते अम्भोधारामुदकधारां मुखे सामिदृगन्तरीतिं किंचित्तिर्यक्प्रवृत्तनेत्रान्तरीतिं कुरुते । वर्तमाने लट् ॥ १७॥ **उपेन्द्रवज्रेति** । यत्र जगणतगणजगणा गुरुद्वयं च तथा पञ्चभिः षड्भिश्च यतिश्चेदुपेन्द्रवज्रावृत्तम् । अत्रापि नवेत्यनुषज्यते॥**इयमिति** । पदान्ते चरणान्ते लालम्बिता अतिशयेन लम्बिता वेणिर्वल्लीव यस्याः सा तथोक्ता । 'लबि अवस्रंसने च' इत्यस्माद्यङन्तादधिकरणे क्तः । कुरङ्गीनयना इयं वामेन करेण आम्रस्य रसालस्य शाखां धृत्वा अस्य पान्थस्य मनः आक्रष्टुमिवेत्युत्प्रेक्षा। आनताङ्गी सती नम्राङ्गी सती विभाति । 'भा दीप्तौ' लट् ॥१८॥ **मिश्रेति** । तामुपेन्द्रमालाम् । बुधा इति शेषः ॥ **यथेति** । पातुं प्रवृत्तः पान्थो विरला अङ्गुलयो यस्य तथोक्तः सन् तस्याः कान्ताया मुखमिन्दुरिव तं यथा यथा पश्यति तथा तथा सव्रीडहासा त्रपास्मिताभ्यां सहिता कान्ता अम्बुधारामुदकधारां प्रेमरसेन साकम् । सहयुक्तेऽप्रधाने तृतीया । तनुते । 'तनु विस्तारे' इत्यस्माल्लट् ॥ १९ ॥ **शालिनीति** । मतता मगणतगणतगणाः। गौ च गुरुद्वयमपि । श्रुतितुरङ्गमैश्चतुर्भिः सप्तभिर्यतिः । यत्र तद्वृत्तं शालिनीनामकमित्यर्थः ॥ **धन्येति** । इयं कामिनी यद्यस्मात् । पीयूषाभैरमृताभैः शीतशीतैरत्यन्तशीतैः । अतिशयार्थे वीप्सा अम्बुभिः सप्रेम यथा तथोत्थैः सामिनेत्रान्तपातैः तिर्यक्प्रवृत्तनयनान्तवीक्षणैः । 'हेतौ' इति तृतीया । उच्चलन्त्योर्भ्रुवोर्विलासैः पान्थयूनः पथिकतरुणस्य । विशेषणोत्तरपदो विशेषणोभयपदो वा कर्मधारयः । प्रीतिं पु-

**मत्ता मभसगैर्युक्ता यतिः श्रुतिगुहाननैः ।**

(ध्वजं निर्दिश्य ।)

स्फारस्फीता वसति पताका माध्वे तीर्थे विधुतजनानाम् ।
तैस्तैर्देहैः सह सुरलोकं गन्तुं स्थूणा हरिनिहितेव ॥ २१ ॥

**भामिनी स्याद्भभभास्त्रिभिर्यतिचतुष्टयम् ॥**

उद्भवदम्बुजसंततिसंततसंचरदुच्चरथाङ्गविहङ्गकम् ।
सारसुधामधुराम्बुलसन्त्विह मध्वसरो वरमानिनि राजते ॥ २२ ॥

अधिगतसलिलसीकरमृदुसंचरदनिलाङ्कुरपरिचयपरिचितचापलकमलावलोकनकुतूहलशैलीपरिशीलितहृदयस्य मम हृदयमवगाहतेऽधुनोहसलिलनिधौ ।

**राजहंसी नरौ रो गौ यतिः स्याद्वतुसायकैः ।**

---

णाति पोषणं करोति । 'पुष पुष्टौ' इत्यस्मात्कर्तरि लट् । तद्वन्या ॥ २० ॥ **मत्तेति ।** नाभैतत् । मभसगैः मगणभगणसगणगुरुभिः। श्रुतिगुहाननैश्चतुर्भिः षड्भिः॥**स्फारेति ।** स्फारेणातिशयेन स्फीता प्रकाशमाना पताका ध्वजः । माध्वे तीर्थे मध्वसरसि । विधुतानां जनानां स्नातानां जनानाम् । 'कर्तृकर्मणोः कृति' इति कर्तरि षष्ठी । तैस्तैर्देहैर्ब्राह्मणादिदेहैः । यावदर्थे वीप्सा । सहार्थयोगात्तृतीया । सह सुरलोकं स्वर्गम् । 'स्वर्लोको देवलोकः स्यात्' इति त्रिकाण्डशेषः । गन्तुं हरिणा निहिता स्थापिता स्थूणेव स्तम्भ इवेत्युत्प्रेक्षा । 'स्थूणा सूर्म्यां गृहस्तम्भे स्तम्भमात्रेऽपि च स्त्रियाम्' इत्यनेकार्थः। 'स्थूणा सूर्मी च दारु च' इति त्रिकाण्डशेषश्च । वसति । 'वस निवासे' लट् ॥ २१ ॥ **भामिनीति ।** भगणचतुष्टयं त्रिभिस्त्रिभिरक्षरैर्यतिश्चेद्भामिनीनामकं वृत्तम् । अत्र नवेत्यध्याहारः॥ **उद्भवदिति ।** उद्भवन्त्यामम्बुजानां संततौ वृन्दे (संततं यथा तथा) संचरन्त उच्चा रथाङ्गविहङ्गकाः चक्रवाका यस्मिँस्तथोक्तम् । सारं श्रेष्ठं सुधेव मधुरमम्बु तेन लसत्प्रकाशमानं मध्वसरो राजते । 'राज दीप्तौ' लट् । हे वरमानिनि, इह पश्येति शेषः ॥ २२ ॥ **अधिगतेति ।** अधिगताः स्वीकृताः सलिलानां सीकरा यैस्ते च मृदु यथा तथा संचरन्तश्च ते अनिलाङ्कुराश्च तेषां परिचयेन संपर्केण परिचितमभ्यस्तं चापलं यस्य तस्य कमलस्यावलोकने कुतूहलस्य शैल्या रीत्या परिशीलितं संस्पृष्टं हृदयं चित्तं यस्य तथोक्तस्य मम हृदयमूह एव सलिलनिधिः समुद्रस्तस्मिन्नधुना अवगाहते निमज्जतीत्यर्थः। 'गाहू विलोडने' इत्यस्माल्लट्। **राजहंसीति ।** नरौ नगणरगणौ रो रगणः । गौ गुरुद्व-

सरससारसं वारकामिनीपदपराजयप्राप्तदुर्यशः ।
पतितमम्भसि क्षन्तुमक्षमं परवशं मुहुः संचलत्यहो ॥ २३ ॥

**भम्साश्चम्पकमाला गः शरैर्वर्णैर्यतिर्भवेत् ॥**

दत्तमुखं सद्भास्वति पद्मं भूरि तपस्यत्यम्बुनि लब्धुम् ।
अत्र च सत्याः संचरदेणीशावकनेत्र्याः पादसमत्वम् ॥ २४ ॥

**स्निग्धा स्याद्भममा यत्र हराननयुगैर्यतिः ।**

अपि च ।

अम्बुजमेतद्भृङ्गव्याजान्मूर्ध्नि कलङ्कं धत्ते नूनम् ।
आनननेत्रात्पाणेः पादादत्र पराभूतं सत्सत्याः ॥ २५ ॥

---

यम् । ऋतुसायकैः षड्भिः पञ्चभिर्यतिश्चेद्राजहंसी वृत्तं भवति ॥ **सरसेति** । वारकामिन्याः पदाचरणात्पराजयेन प्राप्तं दुर्यशो दुष्कीर्तिं क्षन्तुमक्षममसमर्थं सरसं च तत्सारसं च कर्तृ । अम्भस्युदके पतितं सत्परवशं सत् । उत्थातुमशक्तत्वादिति भावः । मुहुः संचलति । अहो इत्युत्प्रेक्षा ॥ २३ ॥ **भम्सेति** । भम्साः भगणमगणसगणा गः गुरुः । शरैः पञ्चभिर्वर्णैर्यतिश्चेच्चम्पकमालावृत्तं भवति । रुक्मवती वृत्तमिति केचित् ॥ **दत्तेति** । पद्मं कर्तृ । किं चेति चार्थः । भास्वति सूर्ये । औपश्लेषिकेऽभिव्यापके वा आधारे सप्तमी । दत्तमुखं सत् कृतवदनं सत् । अत्र पुर्यां संचरन्त्या एणीशावकनेत्र्या मृगीशिशुनेत्र्याः । विशेषणोभयपदसमासः । सत्याः साध्व्याः पादसमत्वं लब्धुमम्बुनि भूरि यथा तथा तप्स्यति । तापयति शरीरमिति तपः कायक्लेशरूपशुभाचारः । 'तप संतापे' इत्यस्मादौणादिकोऽसुन्प्रत्ययः । तस्मात् 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' इति क्यङि 'तपसः परस्मैपदं च' इति परस्मैपदम् । लट् । तपश्चरतीत्यर्थः । गम्योत्प्रेक्षा ॥ २४ ॥ **स्निग्धेति** । भममा भगणमगणमगणाः । हराननयुगैः पञ्चभिश्चतुर्भिः यतिश्चेत्स्निग्धा नाम । **मणिमध्य**मिति केदारः ॥ **अम्बुजमिति** । एतद्दृश्यमानमम्बुजं कर्तृ । अत्र पुर्यां सत्याः साध्व्या आनननेत्रात् आननं च नेत्रं चाननननेत्रमिति प्राण्यङ्गत्वादेकवद्भावः । पाणेर्हस्तात् । पादात् । 'जनिकर्तुः प्रकृतिः' इत्यनेन पञ्चमी । प्रकृतित्वं च कारणत्वम् । न तु विकारित्वम् । वसुदेवादुत्पन्नो माधवः । दण्डाद्घटो जायत इत्यादौ प्रकृतिविकृतिभावाभावेऽपि पञ्चमीदर्शनात् । नात्र 'विभाषागुणेऽस्त्रियाम्' इत्यनेन पञ्चमी । तस्य गुणहेतुस्थल एव विधानात् । यदि 'विभाषा' इति योगविभागादगुणेऽस्त्रियामपि पञ्चमी निबन्धनम्, तर्हि अनेनैवोपपत्तौ 'जनिकर्तुः प्रकृतिः' इति सूत्रवैयर्थ्यम् । यत्तु 'जनिकर्तुः प्रकृतिः' इत्यनेन प्राप्तां पञ्चमीं बाधित्वा 'हेतौ' इति तृतीयायां प्राप्तायां 'शत्रोः शत्रुरीषन्मित्रम्' इति न्यायेन तामपि बाधित्वा 'विभाषागुणेऽस्त्रियाम्' इत्यनेन वैकल्पिकपञ्चमीप्राप्तिः भाष्यानुसारेण योगविभागात्क्वचित्क्वचित्प्रयोगानुसारेणागुणेऽस्त्रियामिति चे-

**विद्युन्माला ममगगा यतिर्विधिमुखैर्युगैः ।**

अट्टा यस्मिन्राराज्यन्ते मृष्टा रत्नैरैन्द्रैर्नूत्नैः ।
क्रीडाकीरः स्वीयं बिम्बं भित्तावन्यं बुद्ध्वा क्रुद्धः ॥ २६ ॥

**भतौ लगौ माणवकं यतिर्जलधिभिर्युगैः ।**

भर्ममये हर्म्यतटे शर्मसखीनर्मरताम् ।
पद्ममुखीं पद्मगृहां वेद्मि सतीं मूर्तिमतीम् ॥ २७ ॥

**प्रमाणिका जरलगा न यतिः पादमध्यगा ।**

मदेभकुम्भसंनिभस्तनद्वयीचलत्पटी ।
वरीभरीति भामिनी सखीमुखे सुखं मुखम् ॥ २८ ॥

---

दस्तु 'वासुदेवादुत्पन्नः' इत्यादौ, तेनैव पञ्चम्युपपत्तिरित्यलं प्रसक्तानुप्रसक्त्या । पराभूतं सत्पराजितं सत् । भृङ्गव्याजाद्भ्रमरमिषान्मूर्ध्नि शिरसि कलङ्कं धत्ते । 'डुधाञ् धारणपोषणयोः' इत्यस्माल्लट् । नूनमित्युत्प्रेक्षायाम् । 'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः । उत्प्रेक्षा व्यज्यते' इत्युक्तेः ॥ २५ ॥ **विद्युन्मालेति** । ममगगाः मगणमगणगुरुगुरवः । विधिमुखैश्चतुर्भिर्युगैश्चतुर्भिः ॥ **अट्टा इति** । येषामित्यध्याहारः । येषामट्टानां भित्तौ क्रीडाकीरो लीलाशुकः स्वीयं नैजं बिम्बमन्यं शुकान्तरं बुद्ध्वा क्रुद्धो भवति । ऐन्द्रै रत्नैः हरिन्मणिभिर्मृष्टा घट्टितास्तेऽट्टा, क्षौमा यस्मिन्पुरे राराज्यते । 'राजृ दीप्तौ' इत्यस्माद्यङन्तात्कर्तरि लट् । अत्र भ्रांत्युदात्तयोरङ्गाङ्गिभावेन संकरः ॥२६॥ **भताविति** । भतौ भगणतगणौ लगौ लघुगुरू । जलधिभिश्चतुर्भिः । युगैश्चतुर्भिः । माणवकमिति नाम । **माणवकक्रीडितक**मिति सूत्रकारः । **माणवकक्रीड**मिति पिङ्गलः । **माणव**मित्यपि केचित् ॥ **भर्मेति** । भर्ममये सौवर्णे।'गाङ्गेयं भर्म कर्बुरम्' इत्यमरः।हर्म्यस्य प्रासादस्य तटे । औपश्लेषिकी सप्तमी । शर्मणा सुखेन।'शर्मशातसुखानि च' इत्यमरः। सखीभिः सह नर्मणि । 'क्रीडा लीला च नर्म च' इत्यमरः । रतामासक्तां पद्ममिव मुखं यस्यास्तथोक्ताम् । सतीं कान्तां मूर्तिमतीं पद्मगृहां पद्मं गृहं यस्यास्तां लक्ष्मीमित्यर्थः । वेद्मीत्युत्प्रेक्षा । 'विद ज्ञाने' इत्यस्माल्लट् । अत्रानुप्रासोत्प्रेक्षयोः संसृष्टिः ॥ २७ ॥ **प्रमाणिकेति** । जरलगा जगणरगणलघुगुरवः। प्रमाणिकेति नाम । **प्रमाणी**ति केचित् ॥**मदेभेति** । मदविशिष्टश्चासाविभो गजस्तस्य कुम्भयोः संनिभयोः स्तनयोर्द्वय्यां युग्मे चलन्ती पटी अंशुकं यस्यास्तथोक्ता । 'जातेरस्त्री–'इत्यादिना ङीष् । भामिनी सख्या मुखे मुखं स्वाननं सुखं यथा तथा वरीभरीति। पुनः पुनः स्थापयतीत्यर्थः । अत्र णिचोऽन्तर्नियतत्वात् णिच्कार्यं न दृश्यते । तथा च धारणानुकूलव्यापारानुकूलव्यापारो बिभर्तेरर्थः । धारणं च संयोगानुयोगित्वम् । आद्यव्यापारः सखीमुखनिष्ठः द्वितीयव्यापारो भामिनीनिष्ठः । अधिकरणत्वविवक्षया मुखपदात्सप्तमी

**समानिका रजगला न यतिः स्यात्पदान्तरे ।**

शम्बरीकिशोरलोललोचनाञ्चलान्तरेण ।
सूचयन्त्यलं प्रियं किमप्यसौ श्रुतौ ब्रवीति ॥ २९ ॥

अथ सकलकलाविलाससललितललनाजनलपितमालाजितशुकाकलितमञ्जुलपिञ्जरजटिलविशङ्कटविटङ्कां स्फुटतरस्फाटिककुरण्टिकाकरतलकलितकनककुम्भैरुन्नमत्कुचभारामिव, पद्मरागमणिगणरञ्जितभित्तिभिस्ताटङ्कभासुरकपोलतलामिव, विचित्रतरमुक्ताप्रवालपरिचिततोरणस्रजा मेखलाकलापलालितामिव, मरकतमणिनिचयरचितशिरोभागेन विबद्धकचभारामिव, कलिन्दनन्दिनीतुङ्गतरङ्गभङ्गिसकूलदुकूलसंवीतसारसारसदृशां कदम्बेन कादम्बिनीमिव, सतटिद्घनामभ्रंकषभङ्गिभिः शृङ्गैर्गाहमानामिव निलिम्पपुरीम्, कामिनीजनकमनीजनमवीणानिनादैर्गायन्तीमिव, सुधाधवलिम्ना हसन्तीमिव सौधश्रेणीं वर्णयन्तं निजकान्तमप्राक्षीदायताक्षी ।

**नभौ भरौ चेद्द्रुतविलम्बितं न यतिः पदि ॥**

---

'न वरीभरीति कवरीभरे स्रजः' इत्यादिकालिदासोक्तिवत् । यद्यत्र कबरीति कबरीभरस्य स्वाङ्गत्वात्स्वत्वोपचार इत्युच्यते, तर्हि अत्रापि अतिप्रियसखीत्वात्स्वत्वोपचारः । रूपं तु 'डुभृञ् धारणपोषणयोः' इत्यस्मात् 'धातोरेकाचः' इति यङि द्वित्वे 'यङोऽचि च' इति लुकि 'यङो वा' इतीटि 'ऋतश्च' इत्यभ्यासरीगागमे बरीभरीति इति । अत्रानुप्रासोपमयोः संसृष्टिः ॥ २८ ॥ **समानिकेति** । रजगला रगणजगणगुरुलघवः । समानिकेति नाम ॥ **शम्बरीति** । शम्बरीकिशोरस्य मृगीशिशोर्लोललोचने इव स्थितयोर्लोललोचनयोश्चञ्चलनेत्रयोरञ्चलान्तरेण प्रदेशान्तेन । 'अञ्चलं च तटं पुटम्' इति प्रकाशः । 'अन्तरमवकाशावधिव्यवधानान्तर्धिभेदतादर्थ्ये' इत्यमरमेदिन्यौ । प्रियमलमत्यन्तं सूचयन्ती सती । 'सूच पैशुन्ये' इत्यस्मात्स्वार्थणिजन्तात्कर्तरि शतृप्रत्ययः । श्रुतौ कर्णे । सख्या इति शेषः । किमपि ब्रवीति । 'ब्रूञ् व्यक्तायां वाचि' इत्यस्माल्लट् । अत्रोपमेयभूतस्य शम्बरीकिशोरलोचनस्य वाचकस्य चानुपादानाल्लुप्तोपमा ॥ २९ ॥ **अथेति** । अनन्तरम् । आयते अक्षिणी यस्यास्तथोक्ता कलगीतप्रियेत्यर्थः । 'विशङ्कटं पृथु बृहद्विशालं पृथुलं महत्' इति । 'कपोतपालिकायां तु विटङ्कं पुंनपुंसकम्' इति चामरः । 'शालभञ्जी दारुगर्भा कुरण्टी दारुपुत्रिका' इति त्रिकाण्डशेषः । कलिन्दनन्दिनी कालिन्दी । भङ्गिः रीतिः । 'सकूलं सदृशं समम्' इति कमलाकरः । अप्राक्षीत् । 'प्रच्छ ज्ञीप्सायाम्' लुङ् ॥ **नभाविति** । नभौ नगणभगणौ भरौ भगणरगणौ चेद्द्रुतविलम्बितमिति नाम ॥

विरचिता किल केन पुरी पुरा रजतपीठपुरीति कथं प्रथा ।
तदसुवल्लभ वेत्तुममन्दया कुतुकमालिकया कलितं मनः ॥ ३० ॥

अथ तामिदमाह स कलगीतः—

**हंसी मभनगाः प्रोक्ता यतिर्वेदैर्गुहाननैः ।**

एणीनेत्रे तदुदयविधिं नाम्नश्चास्याः करणमखिलम् ।
वच्मि स्पष्टं शृणु हितमनाः पुण्यश्रेणीकरणकुशलम् ॥ ३१ ॥

**कलगीतं सतयगाः शरैर्बाणैर्यतिर्भवेत् ॥**

कमलाकान्तः स्वयमुद्भूतो जमदग्नेः सत्सदने रामः ।
परशूद्धासी धरणीभागे कुमहीपानां विशरं कर्तुम् ॥ ३२ ॥

**कमला स्यात्सजजगा विच्छिन्ना सायकैः शरैः ।**

हतबाहुजां बहुधा महीं प्रविधाय तां हृदि जात्वसौ ।
तदचिन्तयद्भुवनाद्भुतं न पुरा कृतं भुवि कैरपि ॥ ३३ ॥

---

**विरचितेति** । हे असुवल्लभ प्राणप्रिय, इयं पुरी पुरा केन विरचिता निर्मिता । किलेति संभावनायाम् । रजतपीठपुरीति प्रथा ख्यातिः कथं केन निमित्तेन प्राप्तेत्यर्थः । तद्वेत्तुं ज्ञातुममन्दया कुतुकमालिकया कुतूहलमालया । ममेति शेषः । [मनः] कलितं युक्तम् ॥ ३० ॥ **अथेति** । कलगीतो गन्धर्वः । तां प्रियामिदं वक्ष्यमाणमाह स्म । 'ब्रूञ् व्यक्तायां वाचि' इत्यस्माल्लटि तिबादेशे तस्य 'ब्रुवः पञ्चानाम्' इति णलि ब्रुवश्चाहादेशः । 'लट् स्मे' इत्यनेन लिडर्थे लट् । 'दुह्याच्पच्दण्ड्रुधिप्रच्छिचिञ्ब्रूञ्शासुजिमन्थमुषाम्' इत्यादिना ब्रूञो योगात् 'अकथितं च' इति प्रियायाः कर्मत्वात्प्रियावाक्योत्तरं द्वितीया॥ **हंसीति** । नामनिर्देशः। मभनगा मगणभगणनगणगुरवः। वेदैश्चतुर्भिः। गुहाननैः षड्भिः॥ **एणीति** । तस्याः पुर्याः उदयविधिमुत्पत्तिप्रकारम् । अस्याः पुर्या नाम्नश्च करणं निमित्तं स्पष्टं यथा तथा वच्मि । 'वच परिभाषणे' इत्यस्माल्लट् । हे एणीनेत्रे, त्वं हितं समाहितं मनो यस्यास्तथोक्ता सती पुण्यश्रेण्याः सुकृतपङ्क्त्याः करणे कृतौ कुशलं चतुरमेतदखिलं शृणु ॥३१॥ **कलगीतमिति** । नामैतत् । सतयगाः सगणतगणयगणगुरवः । शरैः पञ्चभिः । बाणैः पञ्चभिः ॥ **कमलाकान्त इति** । कमलाया लक्ष्म्याः कान्तो विष्णुरित्यर्थः । स्वयं जमदग्नेर्मुनेः सति शुद्धे सदने उद्भूतः सन् रामो रामनामको भूत्वा धरणीभागे भूप्रदेशे स्थितानां कुमहीपानां दुष्टराजानां विशरं नाशं कर्तुं परशुना आयुधेन उद्भासी । ताच्छील्ये णिनिः । अभूदिति शेषः ॥३२॥ **कमलेति** । नामैतत् । सजजगाः सगणजगणजगणगुरवः ॥ **हतबाहुजामिति** । असौ रामः । महीं

**मरालिका रयजगाः शिवातनशरैर्यतिः ॥**

भार्गवस्ततः पाथसां निधावक्षिपच्छरं सारविक्रमः ।
तेन तद्गता राक्षसा हताः सोऽपि वारिधिर्दूरतो ययौ ॥ ३४ ॥

**श्येनिकेति समुद्दिष्टा रजरा लगौ न यतिः पदि ।**

रामभोजनामकं स कंचन क्षोणिभागपालनेऽकरोत्प्रभुम् ।
संततं निजाङ्घ्रिकञ्जरञ्जकं मञ्जुपुण्यपुञ्जनीरनीरधिम् ॥ ३५ ॥

**रञ्जिता रजसा लो गो विरामः सायकर्तुभिः ॥**

रामभोजराट् धरणिमण्डलं शासति[1] स भूसुरकदम्बकम् ।
दानवैभवैर्मधुरभाषितै रञ्जयञ्जनं निजविनीतिभिः ॥ ३६ ॥

**न्यभा माणिक्यमालागाव्तुभिः सायकैर्यतिः ।**

---

भूमिं हता बाहुजा क्षत्रिया यस्यां तथोक्ताम् । प्रविधाय कृत्वा भुवि पुरा कैरपि न कृतं नानुष्ठितं भुवनेषु लोकेष्वद्भुतमाश्चर्यकरं यत् तत् । कर्तुमिति शेषः । जातु कदाचित् हृदि मनसि अचिन्तयत् । 'चिति स्मृत्याम्' इत्यस्मात्स्वार्थणिजन्ताल्लङ् ॥ ३३ ॥ **मरालिकेति** । नामकथनम् । रयजगा रगणयगणजगणगुरवः ॥ **भार्गव इति** । ततः आलोचनानन्तरम् । सारः श्रेष्ठो विक्रमः पराक्रमो यस्य तथोक्तो भार्गवो रामः । पाथसां निधौ समुद्रे शरं बाणमक्षिपत् । 'क्षिप प्रेरणे' लङ् । तेन शरेण । कर्तरि करणे वा तृतीया । तद्गताः समुद्रस्थिताः । कर्तरि क्तः । राक्षसा हताः । 'हन हिंसागत्योः' इत्यस्मात्कर्मणि कर्तरि वा क्तः । किं चेत्यप्यर्थः । स प्रविष्टशरो वारिधिः समुद्रो दूरतो दूरात् । 'दूरान्तिकार्थेभ्यः' इत्यादिना प्राप्तायाः पञ्चम्यास्तसिः । ययौ 'या प्रापणे' लिट् ॥३४॥ **श्येनिकेति** । नामैतत् । **सेनिकेति** केचित् । रजरा रगणजगणरगणाः । लगौ लघुगुरू ॥ **रामेति** । संततं निजस्याङ्घ्रिकञ्जस्य पादकमलस्य रञ्जकं पूजादिनालंकारिणं मञ्जु च तत्पुण्यं च तेषां पुञ्ज एव नीरं तस्य नीरधिं समुद्रं रामभोजनामकं कंचन पुरुषं क्षोणिभागपालने स्वाधिष्ठितभूमिप्रदेशपालने प्रभुं राजानं स भार्गवोऽकरोत् । 'डुकृञ् करणे' लङ् परस्मैपदम् ॥३५॥ **रञ्जितेति** । रजसा रगणजगणसगणाः । लो लघुः । गो गुरुः । सायकर्तुभिः पञ्चभिः षड्भिः ॥ **रामभोजराडिति** । रामभोजनामकराजा इत्यर्थः । दानवैभवैर्मधुरभाषितैर्भूसुरकदम्बकं निजविनीतिभिः स्वीयविनयैः जनं रञ्जयन् धरणिमण्डलं शासति स्म । स्मयोगाद्भूतार्थे लट् ॥३६॥ **न्यभा इति** । न्यभा नगणयगणभगणाः ।

---

1. 'गणकार्यमनित्यम्' इत्येतदाश्रित्येदम् । 'शास्ति स स' इति पाठ एव केनचित्पर्यावर्तितो भवेत् ।

भृगुकुलदीपे तत्र रमापे विनिहितचित्ते श्रीभिरमत्ते ।
अवनितलेऽस्मिन्राजनि तस्मिन्भवति समृद्धं स्माशिशुवृद्धम् ॥३७॥

**स्वागतं रो नभगगाः पादमध्ये यतिर्नहि ॥**

एकदा सकलराजनुताङ्घ्रिर्वाजपेयसवनं स विधातुम् ।
आरभन्भृगुकुलोत्तममेनं सप्ततन्तुविबुधं बत वव्रे ॥ ३८ ॥

**तद्भुजंगप्रयातं यौ यौ यतिर्न पदान्तरे ।**

नृपः कारयामास तस्यासनार्थं सुपीठं स रूप्योत्तरं त्वष्टृवर्गम् ।
दिवाकृत्सहस्रप्रभाभासमानं समस्तैश्चिरत्नैश्च रत्नैर्विचित्रम् ॥ ३९ ॥

**मालिनी स्यान्नन्मयया: शिवमूर्तिस्वरैर्यतिः ॥**

भृगुपरिवृढमेनं पीठमारोप्य मेनं
नतिनुतितति पूर्वं याचयामास पूर्वम् ।
भजकसुजनबन्धो ज्ञानसिन्धो मुदन्धो
भवतु पुरविधानं रूप्यपीठाभिधानम् ॥ ४० ॥

---

गौ गुरुद्वयम् ॥ **भृगुकुलेति** । भृगुकुलस्य दीपे प्रकाशके रमापे लक्ष्मीपतौ तत्र रामे विनिहितचित्ते स्थापितचेतसि श्रीभिः संपद्भिरमत्तेऽनुद्धते तस्मिन्रामभोजेऽस्मिन्नवनितले एतस्मिन्भूभागे राजनि सति आशिशुवृद्धमाबालवृद्धं समृद्धमृद्धिमद्भवति स्म । स्मयोगे भूते लट् ॥३७॥ **स्वागतमिति** । नामैतत् । रः रगणः नभगगाः नगणभगणगुरुगुरवः ॥ **एकदेति** । कदाचिदित्यर्थः । सकलै राजभिर्नुतौ स्तुतावङ्घ्री यस्य तथोक्तः स रामभोजः वाजपेयसवनं वाजपेयाभिधयज्ञं विधातुमारभन् सन् भृगुकुलस्योत्तममेनं रामं सप्ततन्तौ मखे विबुधं देवं वव्रे । 'वृञ् वरणे' इत्यस्माल्लिट् । अस्मिन्यज्ञे त्वमेव देवो भवेति याचयामासेति भावः ॥ ३८ ॥ **तदिति** । यौ यौ यगणचतुष्टयम् । भुजंगप्रयातमिति नाम ॥ **नृप इति** । स नृपः तस्य रामस्य आसनार्थं त्वष्टृवर्गं वर्धकिसमूहम् । 'हृक्रोरन्यतरस्याम्' इति द्वितीया । दिवाकृतां सूर्याणां सहस्रमिव प्रभाभिर्भासमानं चिरंतनैः पुराणैः । अकृत्रिमैरिति भावः । समस्तै रत्नैर्विचित्रं रूप्योत्तरं रूप्यपदोत्तरस्थितं सुशोभनं पीठम् । रूप्यपीठमित्यर्थः। कारयामास॥३९॥**मालिनीति**। नन्मयया: नगणनगणमगणयगणयगणाः । शिवमूर्तिस्वरैरष्टभिः सप्तभिः ॥ **भृग्विति** । माया लक्ष्म्या इनं प्रभुं पूर्वं पुरातनं भृगूणां परिवृढं नेतारमेनं रामम् । रुह धातोर्गत्यर्थकत्वेन 'गतिबुद्धि—' इत्यादिना रामस्य कर्मत्वम् । पीठमारोप्य आरोपयित्वा नतीनां नुतीनां ततिः पूर्वा यस्मिन्निति क्रियाविशेषणम् । भजकानां सुजनानां बन्धो ज्ञानस्य सिन्धो मुदामानन्दानामन्धः । पुरवि-

पृथ्वी जसौ जसयला गश्छिन्ना वसुभिर्ग्रहैः ।

इति क्षितिपतेर्वचःसरणिमादरादाददद्-
ददौ वरमरिंदमः खलु तथेति भूमीभुजे ।
तदादि सकला जना जगति रूप्यपीठाभिधां
वदन्ति नगरीमिमां कनकगौरि जानीहि तत् ॥ ४१ ॥

एवमग्रेऽप्युदाहरणान्युन्नेयानि ।

पणवो म्नौ यगौ छेदः पञ्चभिः पञ्चभिर्भवेत् ॥
आन्दोलिका ततरगाः सायकैः सायकैर्यतिः ।
मयूरसारिणी ख्याता रजरा गो न पच्छिदा ॥
मनोरमा नरजगैर्विच्छिन्ना शास्त्रसागरैः ।
कुलटा स्यान्नजनगाः पञ्चभिः पञ्चभिर्यतिः ॥
सुमुखी नजजा लो गोपृषत्कऋतुभिर्यतिः ।
दोधकं भौ भगौ गः स्याज्जस्तगा ग उपस्थितम् ॥
श्रीर्भतौ नगगा यत्र महाभूतै रसैर्यतिः ।
नन्दिनी सजसैर्ल्गाभ्यां युक्ता बाणर्तुभेदिनी ॥
भ्रमरविलसितं मभनलगुरवश्छेदश्चतुर्भिरर्वैद्भिः ।
मौक्तिकमाला भतनगगुरवः श्वासः शरैर्भवेन्मुनिभिः ॥
रथोद्धता रनरला गो यतिर्न पदान्तरे ।

---

धानं नगरविधिः । नगरमिति यावत् । रूप्यपीठमित्यभिधानं यस्य तथोक्तं भवतु । प्रार्थनायां लोट् । इति याचयामासेत्यन्वयः । 'टुयाचृ याञ्चायाम्' इत्यस्माल्लिट् ॥ ४० ॥ **पृथ्वीति** । नामैतत् । जसौ जगणसगणौ जसयलाः जगणसगणयगणलघवः । गः गुरुः । वसुभिरष्टभिः । ग्रहैर्नवभिः ॥ **इतीति** । इति क्षितिपतेः रामभोजस्य वचःसरणिमादरादाददत्स्वीकुर्वन् अरिंदमः शत्रुदमनकारी रामः । तथेति भूमीं पृथिवीं भुनक्तीति तथोक्तम् । 'भुज पालनाभ्यवहारयोः' इत्यस्मात् क्विप् । वरं ददौ । खलु प्रसिद्धौ । तदादि तत्प्रभृति सकला जना जगति इमां नगरीं रूप्यपीठाभिधां वदन्ति । हे कनकगौरि स्वर्णवर्णे, तज्जानीहि निबोध ॥४१॥ ग्रन्थगौरवभिया निरूपणमुपसंहरति—**एवमिति** । इति मन्दारमरन्दव्याख्यायां माधुर्यरञ्जन्याख्यायां गूढकर्तृकायां समवृत्तप्रकरणं समाप्तम् ॥

भद्रिका नो नरलगा वक्राननसगा गुरुः ॥
रलौ भसौ चन्द्रवर्त्म हीन्द्रवंशा ततौ जरौ ।
सैश्चतुर्भिस्तोटकं स्यात्सज्ससैः प्रमिताक्षरा ॥
वैश्वदेवी ममयया यतिः सायकघोटकैः ।
नयौ नयौ च कुसुमविचित्रा भिद्रसै रसैः ॥
स्रग्विणी रैश्चतुर्भिः स्यान्नभजा रः प्रियंवदा ।
नजौ जरौ मालिनी स्यान्नजौ तामरसं जयौ ॥
ननौ मयौ स्फुटाख्यं स्याद्वसुभिर्वार्धिभिर्यतिः ।
जलोद्धतगतिर्जः सो जसौ शास्त्रै रसैर्यतिः ॥
प्रमुदितवदना नगररयुक्ता मुनिभिश्च सायकैश्छिन्ना ।
वनमालिनीति सोक्ता नजभययुक्तार्वसायकैश्छिन्ना ॥
मणिमाला तयतयाश्छिन्ना स्कन्दास्यदर्शनैः ।
जलमाला भभमसाः सागरैर्वसुभिर्यतिः ॥
मता नरौ नरौ भिन्ना वजकोणैर्गुहाननैः ।
ललना स्याद्भतनसैश्छिन्ना स्वर्द्रुमहीधरैः ॥
ललिता स्यात्तभजरैरुज्ज्वला तु नभौ भरौ ।
प्रभा ननौ तथा रेफौ विरतिर्मुनिसायकैः ॥
प्रहर्षिणी मनौ ज्रौ गो गङ्गाब्धककुभिर्यतिः ।
मत्या मत्तमयूरं स्गौ वर्णव्याघ्रीस्तनैर्यतिः ॥
न विच्छिन्ना पदि सजसजगा मञ्जुभाषिणी ।
उर्वसी नस्ततरगा राज्याङ्गैर्ऋतुभिर्यतिः ॥
क्षमा ननौ ततौ गः स्यात्तुरङ्गमरसैर्यतिः ।
ज्भौ सरौ गोऽतिरुचिरा चतुर्भिर्नवभिर्यतिः ॥
चञ्चरीकावली प्रोक्ता यमौ रेफद्वयं गुरुः ।
चन्द्रिका ननतास्तो गश्छेदस्तुरगदर्शनैः ॥
चतुर्भिर्नवभिश्छिन्ना रतिः सभनसा गुरुः ।

मोहप्रलापः श्रुतिभिर्ग्रहैर्भिन्नो मभत्रिगाः ॥
कलहंसी तयसभा गौ यती रससिद्धिभिः ।
पथ्या सजसयल्गैः स्यात्ककुब्भिः श्रुतिभिर्यतिः ॥
असंबन्धा मतन्सा गौ पञ्चभिर्नवभिर्यतिः ।
ननराः सलगाश्छिन्ना स्वराश्वैरपराजिता ॥
बुधैरुक्ता प्रहरणकलिका नन्भना लगौ ।
प्रोक्तेन्दुवदना प्राज्ञैर्भजस्नैः सगुरुद्वयैः ॥
अलोला स्यान्मसमभगगाश्छिन्ना स्वरैर्हयैः ।
नन्ना नसौ मणिगुणनिकरोऽहिहयैर्यतिः ॥
चामरं रो रजजरा वा द्वीपवसुभिर्यतिः ।
प्रभद्रकं नजौ भज्राः पञ्चभैः स्वरिणी रुचिः ॥
रेखा सजनना यश्च सायकैर्दशभिर्यतिः ।
म्रौ मयौ यश्चन्द्रसेना घोटकैर्वसुभिर्भिदा ॥
मन्दाकिनी त्मयता गो वेदैर्वेदयतिर्भवेत् ।
प्रमदा सत्यसभगा वर्णैर्वर्णयतिर्भवेत् ॥
न्मौ जस्लगाः सुललिता युगैर्युगयतिर्भवेत् ।
स पञ्चचामरो ज्रौ ज्रौ जगौ छेदो न वापदि ॥
भरनननगयुक्तं गजविलसितमाहुः स्वरैर्घनैश्छिन्नम् ।
नजभजरगसंयुक्ता सप्तभिरश्वैश्च वाणिनी छिन्ना ॥
मन्दाक्रान्ता मभ्नतास्तो गावब्धिषडगैर्यतिः ।
यम्नाः सभ्लाः शिखरिणी गोरसैः शंकरैर्यतिः ॥
हरिणी न्सम्रसलगाः षडब्धिभुवनैर्यतिः ।
तन्नर्कुटकमाख्यातं नज्भैर्जजलगैर्युतम् ॥
तद्वंशपत्रपतितं भरनभनलगं च दिङ्मुनिच्छिन्नम् ।
कथितं च घनमयूरं ननभसरलगं स्वरै रसैश्छिन्नम् ॥
मो लौ यौ यः कुसुमितलता भूतत्वगैर्यतिः ।

शुभं सनजना भः सः पापाङ्गाङ्गगुणैर्यतिः ॥
रतौ जजौ भरौ सिद्धिबाणाक्षैर्हरनर्तनम् ।
नद्वया च चतूरेफा निशा स्याद्दिग्वसुच्छिदा ॥
मल्लिका स्याद्रसजजा भरौ छिन्नाष्टपङ्क्तिभिः ।
विलासो मः ससौ राश्च गुणषड्वसुभिर्यतिः ॥
मेघविस्फूर्जिता यम्नाः स्नरगाभिद्रसर्त्वगैः ।
शरत्रयैर्युगैश्छिन्ना जन्भस्नज्गा वरूथिनी ॥
नवभिर्दशभिश्छिन्नं सरलं न्भ्रसजा जगौ ।
मत्तेभविक्रीडितं स्म्रन्म्यलगा विश्वाश्वभेदनम् ॥
मदकलनी नजनभसा नलगाश्छिन्ना शराङ्गबाणाङ्गैः ।
कनकलता सा कथिता षण्नैर्युक्ता तथा लगाभ्यां च ॥
भ्रन्भभ्रलगा ग्रहै रुद्रैर्विच्छिन्नोत्पलमालिका ।
म्रभ्नैः सुवदना यभ्लैर्गैर्नावाश्वारिभिद्युता ॥
रजत्रयलगैर्युक्तं मालवं केचिदूचिरे ।
वेश्यारतं तनललैर्गाभ्यां षट्षड्षडङ्घ्रिभित् ॥
मरभनया यौ मुनिमुनिमुनिभिः स्यात्स्रग्धरा विभिन्नाङ्गी ।
सुरनर्तकी रनरना रनरा विरती रसर्तुशास्त्रगुणैः ॥
मत्तेभाख्यं तभयजसरनगयुक्तं स्वरार्कफणिभिन्नम् ।
भरनरनरनगयुक्तं चुम्बनसूर्यैः प्रभद्रकं भिन्नम् ॥
मदिरा सप्तभगणैर्गुरुणान्तेऽपि संयुता ।
तुरंगना लगौ माध्वी मासै रुद्रैश्च वा यतिः ॥
नगणेन तर्कजलगै रुद्रर्तुरसैर्यतिः सुधालहरी ।
नजभजसजनलगयुतं रुद्रार्कैर्भिन्नमश्वललिताख्यम् ॥
घोटकाख्यं वृत्तमिदमष्टभिः सगणैर्युतम् ।
स्वैरिणीक्रीडनं प्रोक्तमष्टभी रगणैर्युतम् ॥
वेश्याप्रीतिर्मभयमनभनसयुक्ताहिफणिगजैश्छिन्ना ।
कलकण्ठाख्यं सजनजभनरनगाश्चाहिभोगिनिधिभिन्ना ॥

चेटीगतिश्च गायत्री या लगौ छिदिनैर्मृगैः ।
अन्नस्त्रन्भगगैरर्वार्वैर्वसुभिदि रञ्जनम् ॥
लालिनी स्याद्रसजगा बालिका तु रनौ सगौ ।
तन्वी शरमुनीनैश्छिद्भलसभनयैर्युता ॥

इति समवृत्तप्रकरणम् ।

नगणद्वितयं स्यादौ सप्त रेफास्ततो यदि ।
चण्डवृष्टिप्रयाताख्यो दण्डकश्चतुरङ्घ्रिकः ॥
नद्वयादष्टरैरर्णो नवरैरर्णवो मतः ।

---

अथ दण्डकनिरूपणं कुर्वन्नादौ चण्डवृष्टिप्रयातलक्षणमाह—**नगणेति** । आदौ नगणद्वितयं [नगण]द्वयं ततः सप्त रेफाः सप्त रगणा यदि, तर्हि चण्डवृष्टिप्रयाताख्यो दण्डको भवति। ननु सामान्यलक्षणमनुक्त्वा विभक्तभेदलक्षणकथनमयुक्तमिति चेदाह—दण्डकश्चतुरङ्घ्रिक इति । अङ्घ्रित्वं चात्रैकोनसहस्रवर्णाधिकवर्णानात्मकत्वे सति सप्तविंशतिवर्णन्यूनवर्णानात्मकत्वे सति वर्णात्मकत्वम् । वृत्तपादातिप्रसङ्गवारणाय द्वितीयं दलम् । गद्यादिवारणायाद्यं दलम् । ध्वनिशब्दवारणाय वर्णात्मकत्वम् । यद्यपि एकन्यूनसहस्रवर्णाद्यात्मके गद्येऽतिप्रसङ्गस्तथापि वर्णात्मकत्वमित्यस्य नगणद्वयाव्यवहितोत्तररगणसजातीयगणघटितवर्णात्मकत्वविवक्षणान्न दोषः । साजात्यं च गणविभाजकतावच्छेदकमत्त्वादिना । अव्यवहितोत्तरत्वनिवेशान्न पादाभासेऽतिप्रसङ्गः । तथा चैतादृशपादचतुष्टयवत्त्वं सामान्यलक्षणम् । प्रथमाङ्घ्रिसदृशद्वितीयाङ्घ्रिसदृशतृतीयाङ्घ्रिसदृशचतुर्थाङ्घ्रिमत्त्वमिति निष्कर्षः। तेन विषमिते दण्डकाभासे नातिप्रसङ्गः । सादृश्यं च स्वविशिष्टगणमात्रघटितत्वेन । गणे स्ववैशिष्ट्यं च स्वघटकगणगतसंख्याक्रमोभयविशिष्टत्वसंबन्धेन । नन्वर्धसमे विषमे च दण्डकेऽव्याप्तिरिति चेन्न । तस्यालक्ष्यत्वात् । प्राचीनै रामकीर्तिगोमानसादिभिः समपादचतुष्टयस्यैव दण्डकत्वेनोक्तत्वादिति संक्षेपः । इत्थं च नगणद्वयोत्तररगणसप्तकघटितपादचतुष्टयवत्त्वं चण्डवृष्टिप्रयातस्य लक्षणं बोध्यम् । मादिगणद्वयोत्तररगणसप्तकघटिते दण्डकाभासेऽतिव्याप्तिवारणाय नगणद्वयोत्तरत्वं रगणसप्तके विशेषणम् । वृत्तेऽतिव्याप्तिवारणाय घटितान्तं पादविशेषणम् । दण्डकार्धवारणाय चतुष्टयपदम् । एवमेवाग्रेऽपि लक्षणं परिष्करणीयम् । उदाहरणं तु विस्तरभयान्न निरूपितं ग्रन्थकारेण । वयं त्वस्य ब्रूमहे—

कमलनयन केशवानन्त गोविन्द विष्णो हरे पाहि मां सर्वदा सर्वथा
परमपुरुष भोर्भवाम्भोधिमध्ये निमज्जन्तमत्यन्तमाम्नायवेद्योत्तम ।
कथमिह भुवि मामनाथं भवत्पादपद्मार्पितस्वान्तभृङ्गं वदोपेक्षसे
त्रिभुवनजनपालने नित्ययुक्तो भवान्सदृयानीरधे श्रीनिधे कान्तिधे ॥

एवमन्यत्राप्युदाहरणान्युन्नेयानि ॥ **नद्वयादिति** । सर्वत्रान्वेति । अष्टैरष्टभी रगणैः ।

दशरैर्व्याल आख्यातो जीमूतो रुद्ररैर्मतः ॥
लीलाकरः सूर्यरैः स्यादुद्दामो विश्वरैर्मतः ।
मनुरैः शङ्खनामा स्यात्तिथिरैः पद्मको मतः ॥
एवमेकैकरगणवर्धनात्सकलाङ्घ्रिषु ।
एकन्यूनसहस्रार्णपर्यन्तं दण्डका मताः ॥
गणसप्तकसंयुक्तो नद्वयाद्रगणं विना ।
बुधैः प्रवितकः ख्यातः कैश्चिद्यैः सप्तभिर्युतः ॥
नगणद्वितयादेतदेकैकगणवर्धनात् ।
कुसुमदाब्जतरङ्गादिनाम्ना भेदाश्च पूर्ववत् ॥

इति दण्डकप्रकरणम् ।

उपचित्रा ससौ सल्गा ओजे युजि भभा गुरू ।
द्रुतमध्या भत्रयं गावोजेऽन्यत्र नजौ जयौ ॥
ओजे वेगवती सागः समे तु भभसा गगौ ।
ओजे भद्रविराट् तज्रा गो नोजे मसजा गगौ ॥
ओजे केतुमती सज्सा गोऽनोजे भरताः सगौ ।
ओजे वियोगिनी सौ ज्गावनोजे सभरा लगौ ॥

---

एवमग्रेऽपि ॥ **गणसप्तकेति** । नद्वयान्नगणद्वयोत्तरं रगणं विना । 'पृथग्विनाना नाभिस्तृतीयान्यतरस्याम्' इति द्वितीया । गणसप्तकेन युक्तः प्रवितकनामा दण्डको भवति । कैश्चित्केदारादिभिः । यैर्यगणैः ॥ इति माधुर्यरञ्जन्यां दण्डकप्रकरणम् ॥

अथ दण्डकस्यापि समपादचतुष्टयवत्त्वेन समवृत्तकथनानन्तरमधुनार्धसमवृत्तानि क्रमप्राप्तानि लक्षयति । सामान्यलक्षणं तु पूर्वमेवोक्तमिति । तद्भेदेषु प्रथमं तावदुपचित्रालक्षणमाह—**उपचित्रेति** । ओजे विषमे ससौ सगणद्वयं सल्गाः सगणलघुगुरवः । युजि समे समपादयोरित्यर्थः । भभा भगणत्रयं गुरू गुरुद्वयं यदि तर्हि उपचित्रा नाम वृत्तं भवति । एवमग्रेऽपि बोध्यम् । अत्र केषांचिद्भद्रविराडादीनामौपच्छन्दसिकादिभ्यो वैतालीयभेदेभ्योऽभेदेऽपि गणनियमानियमरूपोपाधिभेदाद्भेदो बोध्यः । अत एव केदारोऽपि औपच्छन्दसिकं विराड्वृत्तमप्याह स्म । अत एव पिङ्गलोऽप्युवाच—'वदन्त्यपरवक्त्राख्यं वैतालीयं विपश्चितः । पुष्पिताग्राभिधं केचिदौपच्छन्दसिकं तथा ॥' इति । इदमेव वृत्तं रत्नाकरेऽप्युदाहृतम् ॥ इति माधुर्यरञ्जन्यामर्धसमवृत्तप्रकरणम् ॥

ओजे सौ सलगा युक्ते नभभ्रा हरिणप्लुता ।
अयुज्यपरवक्त्रं नौ रलगा युजि नजौ जरौ ॥
पुष्पिताग्रा ननरया युक्ते तु नजजा रगौ ।
ओजे परावती रज्रा जोऽनोजे तु जरौ ज्रगाः ॥
ओजे सज्सजगा युक्ते सज्ससा मितभाषिणी ।
फलिताग्रं गाधिकान्ते वियोगिन्येव साङ्घ्रिषु ॥
सभतैर्यसभैर्गाभ्यां युक्ता विषमपादयोः ।
सभतैर्यससैर्युक्ता कलिकाललिता युजोः ॥

इत्यर्धसमवृत्तप्रकरणम् ।

आद्यपादेऽष्टवर्णाः स्युर्युग्माद्येषूत्तरोत्तरम् ।
अधिकाश्च चतुर्वर्णा नियमो लगयोर्न चेत् ॥
विबुधास्तत्पदचतुरूर्ध्वाख्यं वृत्तमूचिरे ।
आपीडोऽत्रैवान्त्यवर्णौ गावन्ये ला यदाङ्घ्रिषु ॥
आदौ गुरू न चान्ते चेत्प्रत्यापीडो भवेदयम् ।
आपीडाद्यद्वितीयाङ्घ्री यदि विनिमयात्कृतौ ॥
तदा तु कलिकेत्युक्ता मण्डरीत्यपि कैश्चन ।
आपीडस्यैवाद्यपादस्तृतीयश्चेत्तृतीयकः ॥
द्वितीयश्चेद्द्वितीयोऽपि यदादिर्लवलीति सा ।
आपीडस्यादिमस्तुर्यस्तुरीयश्चेत्तृतीयकः ॥
तृतीयोऽपि द्वितीयोऽङ्घ्रिर्द्वितीयः प्रथमो यदि ।
उक्ता साम्रृतधारेति मञ्जरीत्यपि कैश्चन ॥

इति विषमे पदचतुरूर्ध्वप्रकरणम् ।

---

अथ क्रमप्राप्तान्विषमवृत्तभेदानाह—**आद्येति** । युग्माद्येषु द्वितीयतृतीयचतुर्थेष्वि-
त्यर्थः । यस्यादिमपादोऽष्टवर्णात्मकः, द्वितीयो द्वादशवर्णात्मकः, तृतीयः षोडशवर्णात्मकः,
चतुर्थो विंशतिवर्णात्मकः । किं च गुरुलघुनियमाविशिष्टाः सर्वे पादाश्चेत्पदचतुरूर्ध्व-
नामकं वृत्तं भवति ॥ **आपीड इति** । अन्येऽन्त्यवर्णद्वयभिन्नाः । ला लघवः । अतः
पूर्वस्मादस्य भेदः । एवमग्रेऽपि । इति माधुर्यरञ्जन्यां पदचतुरूर्ध्वप्रकरणम् ॥

प्रथमे सजसा लश्चेद्द्वितीये नसजा गुरुः ।
तृतीये भनजलगास्तुर्ये सज्सगैः सहितोद्गता ।
उद्गतायास्तृतीयोऽङ्घ्रिरन्भगैः सहितो यदि ।
तदा सौरभकं ब्रूतेऽन्ये सौरलकमूचिरे ॥
उद्गतायास्तृतीयोऽङ्घ्रिर्नन्ससैर्ललितं मतम् ।
उद्गतायाश्चतुर्थोऽङ्घ्रिर्ननन्गैः सरलं मतम् ॥

इत्युद्गताप्रकरणम् ।

आद्ये मसजभैर्गाभ्यां द्वितीये स्नज्रगैर्युतम् ।
तृतीये ननसैर्युक्तं तुर्ये त्रिनजयैर्यदि ॥
उपस्थितप्रकुपितं तमाहुः पूर्वसूरयः ॥
अस्यैवाङ्घ्रिस्तृतीयश्चेन्ननसैर्ननसैर्युतः ।
तदा तु वर्धमानाख्यं वृत्तं पूर्वे बभाषिरे ॥
तार्तीयीकस्तु तस्याङ्घ्रिस्तजरैः संयुता यदि ।
वृत्तं वदन्ति तच्छुद्धविराडार्षभनायकम् ॥

इत्युपस्थितप्रकुपितप्रकरणम् ।

प्रोक्तान्येतानि विषमवृत्तानि प्रस्फुटं विना
अन्यान्यसमवृत्तानि गाथाः प्राहुर्मनीषिणः

इति विषमवृत्तप्रकरणम् ।

अथ मात्राच्छन्दः कथ्यते—

ओजे गणत्रयं पादे द्वितीये तच्चतुष्टयम् ।
गुरुश्चतुर्थेऽपि तथा किं तु लोऽत्र तृतीयके ॥
विषमे जगणो नात्र पथ्यार्या संप्रकीर्तिता ॥

---

उपसंहरति—प्रोक्तानीति । प्रस्फुटं यथा तथा प्रोक्तानि एतानि विषमवृत्तानि विना अन्यानीतराणि असमवृत्तानि विषमवृत्तानि मनीषिणः गाथाः प्राहुरित्यन्वयः । इति माधुर्यरञ्जन्यां विषमवृत्तप्रकरणम् ॥

इदानीं मात्राछन्दोभेदांल्लक्षयन्प्रतिजानीते—अथेति । मात्रागणघटितत्वं लक्षणम्, आर्यान्यतमत्वं वा । मात्रागणलक्षणं तु स्वयमेवाग्रे वक्ष्यति । तत्रादौ पथ्यालक्षणमाह—ओज इति । ओजे विषमे पादे गणत्रयम् । अत्र सर्वत्रापि मात्रागण एव गणपदेन ज्ञेयः ।

गणत्रयं समुल्लङ्घ्य विषमश्चरणो यदि ।
द्वयोः शकलयोरेनां विपुलार्यां प्रचक्षते ॥
द्वितीयावोजयोर्यत्र समयोरादिमौ तथा ।
जगणौ संप्रकाशेते चपलार्येति सा मता ॥
चपलालक्षणं त्वाद्ये पथ्यालक्षणमन्तिमे ।
शकले स्यात्तर्हि मुखचपलेति प्रकीर्तिता ॥
पथ्यार्यालक्षणं त्वाद्ये चपलालक्ष्म चान्तिमे ।
दले यदि स्याज्जघनचपलेति प्रकीर्तिता ॥

इत्यार्याप्रकरणम् ।

गीतिः पथ्यादिमदललक्षणं दलयोर्यदि ।
उपगीतिस्तु दलयोः पथ्यार्योत्तरलक्ष्म चेत् ॥
उद्गीतिः स्याच्छकलयोः पथ्याया व्यत्यये सति ।
आर्यागीतिस्तु पथ्याया आद्यंशे गुरुणाधिके ॥
यत्रैकद्वित्रिमात्राणामाधिक्ये प्रथमे पदि ।
तदा विगीतिः कथिता द्वितीये चेत्सुगीतिका ॥
तृतीये त्वतिगीतिः स्याच्चतुर्थे स्वरगीतिका ।
कटुगीतिस्त्वोजयोश्चेत्समयोर्मधुगीतिका ॥
यदि द्वितीयादिमयोर्बालगीतिरुदाहृता ।
वक्रगीतिस्तु कथिता चेत्तृतीयचतुर्थयोः ॥

इति गीतिकाप्रकरणम् ।

---

द्वितीये तच्चतुष्टयं मात्रागणचतुष्टयं गुरुश्च । चतुर्थे पादेऽपि तथा गणचतुष्टयं गुरुश्च । अत्र द्वितीयाद्विशेषमाह—**किं त्विति** । अत्र चतुर्थपादस्तृतीयके तृतीयगणस्थाने । लो लघुरेक एवेत्यर्थः । अत्रासमपादयोर्विषमे विषमस्थाने जगणो न भवति । तर्हि पथ्यार्येति संप्रकीर्तिता । अयं भावः विषमयोः ॥

गीतिकालक्षणमाह—**गीतिरिति** । दलयोः प्रथमद्वितीयार्धयोः । अत्र सर्वत्र दलपदं वृत्तार्धपरम् । **उपगीतिरिति** । पथ्यार्योत्तरलक्ष्म पथ्यार्योत्तरदललक्षणम् ॥ इति गीतिकाप्रकरणम् ॥

उक्ताचलधृतिः प्राज्ञैर्व्यष्टाभिर्लघुभिर्युता ।
जो वा नलौ वा विश्लोकः ख्यातो मात्राचतुष्टयात् ॥
जो वा नलौ वा व्यब्धिभ्यो मात्राभ्यो वानवासिका ।
लघुश्चेन्नवमश्चित्रा तथैवाष्टमपञ्चमौ ॥
उपचित्रा तु मात्राभ्यो वसुभ्यो भगणो यदि ।
कथं वा व्यष्टमात्राभिः पादाकुलकमिष्यते ॥

इति मात्रासमके षोडशमात्राप्रकरणम् ।

रुचिरा लघवो यत्र त्रिंशतिश्चेत्पुनर्नव ।
अष्टाविंशतिलैर्गेन युतं शिखितमुच्यते ॥
त्रिंशल्लैर्गेन युक्तं तु गणितं परिकीर्तितम् ।
विषमे शैखितं युक्ते गौणितं यदि सा शिखा ॥
अस्यां तु विपरीतायां खजेति परिकीर्त्यते ।
गुरवः षोडशायुक्ते द्वात्रिंशल्लघवो युजि ।
यदि स्युर्ब्रुवतेऽनङ्गक्रीडां तां तु मनीषिणः ॥

इति मात्रासमके त्रिंशन्मात्राप्रकरणं मात्रासमप्रकरणं च ।

ओजयोः पादयोरादौ षण्मात्रा रलगा अथ ।
युक्तयोः पादयोरादावष्टमात्रा रलौ गुरुः ॥

---

अथ मात्रासमकभेदानाह–तत्रादौ षोडशमात्रावृत्तभेदानाह—**उक्तेति । व्यष्टाभिः** षोडशभिः लघुभिर्युता प्राज्ञैरचलधृतिरित्युक्ता । **जो वेति ।** मात्राचतुष्टयात् **जो वा** जगणो वा । **नलौ वा** नगणलघू वा यदि तर्हि विश्लोको नाम वृत्तं भवति । अस्य षोडशमात्रात्मकत्वं सर्वं मिलित्वा एकपादस्य नियतमेव । एतादृशपादचतुष्टयात्मकं वृत्तं भवति । एवमग्रेऽपि । **व्यब्धिभ्यो मात्राभ्यः ।** अष्टमात्राभ्य इत्यर्थः । **वसुभ्यः** अष्टाभ्यः । **कथं वेति ।** गुरुलघुनियमो नास्तीत्यर्थः । इति षोडशमात्राप्रकरणम् ॥

अथ त्रिंशन्मात्रावृत्तान्याह—**रुचिरेत्यादिना ।** ननु त्रिंशन्मात्रावत्त्वाभावादस्य पादस्य कथं त्रिंशन्मात्रावत्त्वमिति चेत् । अष्टाविंशतिमात्रामारभ्य द्वात्रिंशन्मात्रापर्यन्तं त्रिंशन्मात्रोपचारः पूर्वैरङ्गीकृत इति न विरोधः । इति त्रिंशन्मात्राप्रकरणम् ॥

अथ वैतालीयं लक्षयति–**ओजयोरि**त्यादिश्लोकत्रयेण । **ओजयोः पादयोः** विषमपादयोः, **युक्तयोः पादयोः** समपादयोरित्यर्थः । एतयोः समपादयोः केवलं लघवः नैव ।

केवलं नैव लघवस्त्वेतयोराद्यषट्कलः ।
समस्तेष्वपि पादेषु द्वितुर्यारिस्थिताः कलाः ॥
त्रिबाणसप्तमस्थानस्थितैश्च त्रुटिभिः सह ।
गुरुत्वं न भजेयुश्चेद्वैतालीयं प्रकीर्तितम् ॥
औपच्छन्दसिकं प्रोक्तं सर्वत्रान्ते रयौ यदि ।
आपाताली कीर्तितेयं पर्यन्ते भगगा यदि ॥
द्वितीयगुणयोरेको गुरुश्चेद्दक्षिणान्तिका ।
उदीच्यवृत्तिः कथिता तादृग्गश्चेदयुग्मयोः ॥
युग्मयोः प्राच्यवृत्तिस्तु गुरुश्चेत्तूर्यबाणयोः ।
उदीच्यप्राच्यवृत्त्योस्तु पादयोर्विषमौ समौ ।
समौ चेद्यदि तद्वृत्तं प्रवृत्तकमितीर्यते ॥

इति वैतालीयप्रकरणम् ।

---

**द्वितूर्यारिस्थिताः** द्वितीयचतुर्थषष्ठस्थानस्थिताः कलाः मात्राः । **त्रिबाणसप्तम-**
**स्थानस्थितैः** तृतीयपञ्चमसप्तमस्थानस्थैः । **त्रुटिभिः** मात्राभिः । 'त्रियां मात्रा त्रुटिः
पुंसि लवलेशकणाणवः' इत्यमरः । **गुरुत्वम**ेकगुरुभावम् । अयं भावः—प्रथमतृतीयपा-
दयोरादौ षण्मात्राः ततो रगणलघुगुरवः । द्वितीयचतुर्थपादयोरादावष्टमात्रास्ततो रगणलघु-
गुरवः । किं च द्वितीयचतुर्थषष्ठस्थानिकास्तृतीयपञ्चमसप्तमस्थानिकाभिर्मात्राभिः सहैकगु-
रुत्वं न भजेयुश्चेद्वैतालीयं वृत्तं भवति । अत्र समपादादिमात्रा गुरुणा मिश्रिता भवेयुरित्यनेन
विषमपादादिमात्राः केवलं लघुरूपा अपि न दोषः । यथा मदीये पाण्डुरङ्गविलासे—'अधु-
नार्यनिदेशवर्तिनी सखि पश्यानुभवामि बल्लवि । गिरिसारकठोरपञ्जरस्थितिखिद्यच्छुकका-
सिनीदृशाम् ॥' **औपच्छन्दसिकमिति** । नामैतत् । सर्वत्र पादचतुष्टये । **आपातालीति** ।
नामैतत् । पर्यन्ते मात्रान्ते । अत्रापि सर्वत्रेत्यनुषज्यते । **द्वितीयगुणयोः** द्वितीयतृतीयस्था-
निकयोर्मात्रयोः स्थाने एक एव गुरुः । **दक्षिणान्तिकेति** नाम । **उदीच्यवृत्तिरिति** ।
नामैतत् । अयुग्मयोर्विषमयोः । पादयोरित्यर्थः । तादृग्गश्चेद्द्वितीयतृतीयस्थानिकमात्राद्व-
यस्थानिकैकगुरुश्चेदित्यर्थः । तथा च दक्षिणान्तिकपादचतुष्टयेऽप्येतादृशगुरुः उदीच्यवृत्तेस्तु
विषमचरणयोरेवायं गुरुरिति विशेषः । **उदीच्येति** । विषमौ समौ च पादौ उदीच्यप्राच्य-
वृत्त्योः पादयोः समौ चेत्प्रवृत्तकमित्यन्वयः । तथा उदीच्यवृत्तिविषमपादयोर्विषमपादौ समौ
प्राच्यवृत्तिसमपादयोः समपादौ समौ चेत्प्रवृत्तकमिति भावः । एषु सर्वेष्वप्यन्यत्सर्वं वैताली-
यसदृशमेव बोध्यम् । किं चात्रावधेयम् । एतत्प्रवृत्तसमपादसदृशपादचतुष्टयसत्त्वेऽपि प्रवृत्त-

सर्वपादेषु न स्यातां नसावाद्याक्षरात्परम् ।
अब्ध्यक्षरेभ्यो यगणो वक्त्रमाहुरनुष्टुभि ॥
युजोरब्धेर्जकारश्चेत्पथ्यावक्त्रमुदाहृतम् ।
ओजयोरब्धितो जश्चेद्विपरीतादि तन्मतम् ॥
चपलावक्त्रमयुजोः समुद्रान्नगणो यदि ।
युग्मयोः सप्तमो लश्चेत्सा युग्मविपुला मता ॥
सर्वेषु सप्तमो लश्चेदपि सैवोदिता बुधैः ।
अब्धेस्तश्चेत्तविपुला रश्चेद्रविपुला मता ।
भश्चेद्भविपुला प्रोक्ता नश्चेन्नविपुला मता ॥

इति वक्त्रप्रकरणम् ।

जलजनिजनिजायाप्रेमपाकेन गोपीजनमनसिजकेलीलम्पटे लम्पटेन ।
गुहपुरनिलयेन प्रोद्धृतो वृत्तबिन्दुः सुरकुसुममरन्दे चारुचम्पूप्रबन्धे ॥

इति श्रीमद्घटिकाशतशतघण्टाविहिताष्टभाषाचरणनिपुणस्य वासुदेवयोगीश्वरस्यान्तेवास्यन्यतमस्य गुहपुरवासशर्मणः कृष्णशर्मणः कवेः कृतौ मन्दारम(क)रन्दे चम्पूप्रबन्धे वृत्तबिन्दुः प्रथमः समाप्तिमगमत् ।

---

कमेव । एतद्विषमपादसदृशपादचतुष्टयसत्त्वेऽपि प्रवृत्तकमेवेति । केचित्तु इमौ भेदौ परान्तिकाचारुहासिनीनामकावाहुः । इति वैतालीयप्रकरणम् ॥

वक्त्रभेदानाह—**सर्वेति** । सर्वपादेषु आद्याक्षरात्परमाद्यवर्णोत्तरं नसौ नगणसगणौ न स्याताम् । अब्ध्यक्षरेभ्यश्चतुर्वर्णेभ्यः परं यगणश्चेद्वक्त्रं नाम वृत्तं भवति । अत्राद्यवर्णो गुरुर्लघुर्वा ततः नगणसगणौ विना यथेच्छमेको गणस्ततो यगणस्तदुत्तरं गुरुः लघुर्वा स्थाप्य इत्यर्थः । अत एवोक्तमनुष्टुभीति । अनुष्टुप्छन्दस्येवेमे भेदा भवन्ति न त्वन्यछन्दसीत्यर्थः । यद्यपीदं वर्णच्छन्दस्येव वक्तव्यं तथापि यथा मात्राछन्दसि लघुगुरुनियमो नास्ति तथात्रापीति मात्राछन्दोनिरूपणावसर एवोक्तम् । एवं चैतादृशपादचतुष्टयवत्त्वं वक्त्रस्य लक्षणं बोध्यम् । यथा—'रमाकान्तमुदाराङ्गं राधाविहारसंतुष्टम् । नमाम्येनं सदा विघ्नशान्त्यै कमलसद्वक्त्रम् ॥' एवमग्रेपि । **युजोरिति** । अब्धेश्चतुरक्षरादित्यर्थः । जकारो जगणः अन्यत्सर्वं वक्त्रवदेव । एवमग्रेऽपि । **विपरीतादि तदिति** । विपरीतपथ्यावक्त्रमित्यर्थः । **युग्मयोरिति** । समपादयोरित्यर्थः । अस्य पथ्यावक्त्रेणैव चारितार्थ्येऽपि संज्ञान्तरसूचनाय विपुलाधिकारे पुनरप्युक्तिरिति ज्ञेयम् । पिङ्गलाचार्यमतमाह—**सर्वेष्विति** । **सैव** युग्मविपुलैव । इति वक्त्रप्रकरणम् ॥

इमं वृत्तबिन्दुमुपसंहरति—**जलजनीति** । जले जनिर्यस्य तस्मिन् जनिरुत्पत्तिर्यस्य

सारबिन्दुः ।

**अथात्र सारबिन्दौ तु नेतारं वर्णयामहे ।**
**कर्तुः काव्यस्य चौज्ज्वल्यप्रतिष्ठामूलकारणम् ॥ १ ॥**

अथ सकलभुवनमहितमहितरुणि(णी)निटिलतटतुहिनकणकुलतिलकितसितमणिगणरचितवरहिमकिरणशतरुचिरवरणम्, अमलसरलनिचुलपिचुलविदुलकुवलबकुलकुलकतिलककतककरकरुचिकपिचुककरजकुटजवरणसरणमदनमथनखपुरसुपुरचलदलदधिफलगुडफलमधुरकमरुबककुरबकमुखविविधविटपिकुलपरिपिहितसविधभुवम्, अमितनमदमलमहिममहितकमलभवभवरविविधुशतमखमुखनिखिलसुरवरमुकुटतटघटितमणिगणघटनगुणितरुचिनिचयपरिचितचरणनखरपशुपतरुणिजनमदनकदनरसिकसुरनिलयम्, 'असौ त्रिदिवः, इदं नन्दनवनम्, इमा देववरवारकान्ताः, तत्र यथाकाममानन्दमनुभवन्तु भवन्तः, इति देवदर्शनागतजनानामहिमकरमण्डलसङ्गिना शृङ्गाग्रेण सूचयन्तमिव राजन्तं देवालयमवलोक्य निजरमणमपृच्छदसौ सारसारसाक्षी—

तस्य ब्रह्मण इत्यर्थः । जायायाः पत्न्याः शारदायाः इति यावत् । प्रेमपाकेन प्रीतिशिशुना । 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः' इत्यमरः । गोपीजनानां संबन्धिनी या मनसिजकेली कामकेली तस्यां लम्पटे कृष्णे लम्पटेन आसक्तेन । 'लोलुपो लोलुभो लोलो लम्पटो लालसोऽपि च' इति यादवः । गुहपुरं निलय आश्रयो यस्य तथोक्तः । तेन सुरकुसुममरन्दे मन्दारमरन्दाख्ये चारुचम्पूप्रबन्धे । अत्र घटकर्तव्यसप्तम्यर्थः । तस्य बिन्दावन्वयः । वृत्तबिन्दुर्वृत्तनामकबिन्दुः प्रोद्धृतो विरचित इत्यर्थः । एवमग्रेऽपि एतच्छ्लोकार्थो बोध्यः ॥ इति माधुर्यरञ्जन्याख्यायां मन्दारमरन्दव्याख्यायां गूढकर्तृकायां वृत्तबिन्दुः समाप्तः ॥

**अथेति ।** कर्तुः कवेः काव्यस्य चौज्ज्वल्यप्रतिष्ठयोर्मूलकारणम् । नेतारं नायकम् । तदुक्तं विद्यानाथेन—'प्रबन्धानां प्रबन्धॄणामपि कीर्तिप्रतिष्ठयोः । मूलं विषयभूतस्य नेतुर्गुणनिरूपणम् ॥' इति ॥ १ ॥ सकलभुवनमहिता महिर्भूमिरेव युवतिस्तस्या निटिलतटे फा(भा)लदेशे तुहिनकणकुलस्य कर्पूरसमूहस्य । 'चन्द्रो हिमकणः शीतो घनसारः शिताभ्रकः' इति कमलाकरः । तिलकितस्तिलकमिवाचरित इति वरणविशेषणम् । सितमणिः स्फटिकः । 'स्फटिकः श्वेतरत्नं स्यात्' इति कमलाकरः । वरणः प्राकारः । सरलादिकुरबकान्तं वृक्षनामानि । सविधभुवं समीपदेशम् । गुणिता पुनरुक्ता । पशुपतरुणिजनमदनक-

'किमिदं पुरतः पश्य दिशो धवलयत्यलम् ।
देवागारमिवाभाति देवागारसमद्युति ॥ २ ॥
को देवः केन वा पूर्वं प्रतिष्ठां प्राप्य पूजितः ।
नरीनृतीति तच्चित्ते श्रोतुं कान्त कुतूहलम्' ॥ ३ ॥

एवमनया नयाभिरामया पृष्टः कलगीतस्तत्रैव प्रस्थाप्य विमानवरममितामोदभरितः समूलंकषमुदन्तं पूर्वं वक्तुमुपचक्राम—

'अत्रैव पूर्वं सरसीरुहाक्षि शान्तः कृतज्ञः प्रियवाग्द्विजेन्द्रः ।
मुख्यादनन्तेश्वरसंप्रसादाल्लेभे सुतं मध्यगृहाभिधानः ॥ ४ ॥
त्रेतायां रामकान्ताविरहदवहतस्वान्तसंतापभारो
येनाशम्याशु लङ्कास्थितजनकसुतासारसंदेशवाक्यैः ।
येन प्रामर्दि दृप्तः सुबलसुदुहितुर्द्वापरे पुत्रवर्ग-
स्तेनापि प्रार्थितेन त्रिदशपरिषदा मध्यगेहात्मजत्वम् ॥ ५ ॥
प्रारोदि बालसरणीमनुसृत्य तेन प्राहासि तन्मुखमलोकि पितुः समीपे ।
प्राचालि तत्र करजानुनिवेशनेन प्राभाषि विस्खलितवर्णकमर्भकेलौ ॥ ६ ॥
वासुदेवाभिधानस्य बालस्य मध्यगेहभट्टश्चकार यदोपनयनम् ।
तदैव शारदा विजहार रसनाग्रे तस्य यथा ब्रह्मसभायां सर्वदेवैः संस्तुता ॥७॥

---

दनरसिकसुरः कृष्ण इति यावत् ॥ **किमिदमिति** । देवागस्य मेरोः अरमत्यन्तं समद्युतिर्यस्येति विग्रहः ॥२॥ **नरीनृतीति** । पुनः पुनरतिशयेन वा नृत्यतीत्यर्थः । 'नृती गात्रविक्षेपे' इत्यस्माद्यङो लुक् ॥ ३ ॥ नयो विनयः । **अत्रैवेति** । रजतपीठपुर्यामित्यर्थः । **मध्यगृहाभिधान इति** । मध्यगृहभट्ट इत्यर्थः ॥ ४ ॥ **त्रेतायामिति** । रामस्य कान्ताविरहदवहते स्वान्ते संतापभारः । लङ्कास्थिताया जनकसुतायाः सारैः श्रेष्ठैः संदेशवाक्यैः करणैः येन कर्त्रा आशु अशमि । 'शमु उपशमे' इत्यस्मात्कर्मणि लुङि चिण् । 'नोदात्तोपदेशस्य मान्तस्यानाचमेः' इति नोपधावृद्धिः । द्वापरे सुबलसुदुहितुर्गान्धार्याः पुत्रवर्गः येन प्रामर्दि । त्रिदशपरिषदा देवसदसा प्रार्थितेन तेन वायुनेत्यर्थः । मध्यगेहात्मजत्वं मध्यगेहभट्टपुत्रत्वं कर्म आपि प्राप्तमित्यर्थः। 'आप्लृ व्याप्तौ' इत्यस्मात्कर्मणि चिण् (लुङ्) ॥५॥ **प्रारोदीति** । बालसरणीं बालरीतिम् । 'कृदिकारादक्तिनः' इति ङीष् । तन्मुखं पितृमुखम् । अर्भकेलौ बालकेल्याम् । 'पोतः पाकोऽर्भको डिम्भः' इत्यमरः । विस्खलितं वर्णकं यस्मिन्कर्मणि यथा तथा । 'वर्णं तु वाक्षरे' इत्यमरः ॥६॥

अथात्मजे तातरुचिं विवित्सुर्द्रष्टुं गतः सर्पमयः सुरारिः ।
तदङ्गुलीपिष्टतनुस्तताम सुदुर्लभोऽस्मिन्पितृमार्गगामी ॥ ८ ॥

अथ कदाचिद्ग्रहणनिग्रहणप्लवनजलविहारकन्दुकक्रीडादिषु निजतेजःपराजितवयस्यजनः पाठावसरे किमन्यमनस्कतया ब्रवीषीति भाषणे ततः स्खलनोज्झितानधीतश्रुतिततिपठनकुतूहलिताय मुखवायुसंस्पर्शनिरस्तशिरःशूलायोपाध्यायाय समुचितामच्युतभक्तिरूपिणीं गुरुदक्षिणां वितीर्य दुष्टनिग्रहाय विष्णुगुणप्रख्यापनाय च तेनानुज्ञामाप्याचिरादेव दुर्जनतर्जनकारिणी दुर्गा भवेदतोऽहमाश्रमवरमासाद्य दुर्मतानि निराकृत्य हरिमाहात्म्यं प्रकटीकरोमीति विचिन्त्य जगद्गुरुरपि गुरुमन्विष्यन्द्वापरान्ते पाण्डवनिशान्ते कृष्णाकरसिद्धशुद्धान्धोजग्ध्या शुद्धान्तःकरणमन्तकाले गुरुणा सोऽहंब्रह्मेति मतमनादृत्य माधवं भजेत्युपदिष्टमच्युतप्रेक्षमालक्ष्य वराश्रमाप्त्यै परिचरंस्तच्छ्रवणखिन्नहृदयावात्मानं वन्दमानावाश्वास्य पितराविदमवादीत्—

'नमस्क्रिया न कर्तव्या भवद्भ्यां सेवकाय मे ।
कृता नतिर्हि सैवाद्य ममानुज्ञाश्रमाप्तये' ॥ ९ ॥

इति तेन निरुत्तरीकृतौ बहुखिन्नौ स्वगृहं समीयतुः ।
पुनरेव पिता सुताननं हृदि संस्मृत्य ययौ सुतान्तिकम् ॥ १० ॥

बहुप्रकारैर्वराश्रमवरणाय निवारितोऽपि स्वसाधकवचोभिः पितरमेव याचमानस्ततस्तव जनन्यनुमतिरेव ममानुमतिरिति पित्रोक्तः कदाचिदालयमागत्य समाश्वास्य मातरं तदाज्ञामादाय यतित्वमासाद्य पूर्णबोधाभिधामभजत् । ततः स्वगुणानुरूपे मध्वानन्दतीर्थाभिधाने च ।

---

**वासुदेवेति** । इदं पदचतुरूर्ध्ववृत्तम् ॥ ७ ॥ **अथेति** । सर्पमयः सर्परूपः । सुरारिदैत्यः । आत्मजे वायुपुत्र इत्यर्थः । तातस्य वायोः रुचिं विवित्सुर्वेत्तुकामः सन् । 'विद ज्ञाने (विचारणे)' इत्यस्मात्सन्नन्तात्कर्तरि उप्रत्ययः । द्रष्टुं वासुदेवमिति शेषः । गतः सन् तस्य वासुदेवस्याङ्गुल्या पिष्टा तनुः कायो यस्य तथोक्तः सन् ततास । अस्मिन्कलौ पितृमार्गगामी सुदुर्लभः ॥ ८ ॥ निशान्ते गृहे । कृष्णाया द्रौपद्याः । करेण सिद्धमत एव शुद्धमन्धोऽन्नं तस्य जग्ध्या भोजनेन । 'भिस्सा स्त्री भक्तमन्धोऽन्नम्' इति, 'जग्धिस्तु भोजनम्' इति चामरः । अन्तःकरणं मनः ॥ ९ ॥ १० ॥ नमते नमस्कारिणे । अच्युतबुद्धये

कदाचिद्रूप्यपीठेशो नमतेऽच्युतबुद्धये ।
तपःफलं गृहाणेति कंचनाविश्य तं ददौ ॥ ११ ॥

अथ स तदधिपाज्ञया गतायां सुरसरितौ(?)सरसीं समस्तलोकैः ।
सममभितमतिर्विगाहते स स्फुटमिह तस्य विडम्बनं विचित्रम् ॥ १२ ॥

ततः सोऽयमिष्टसिद्ध्याख्यग्रन्थं ससंप्रदायं व्याख्याय प्रकारान्तरेण भागवतवाचकान्द्विजान् 'नेयं व्यासकृतिः' इत्यभिधाय, ततः 'त्वमेव ब्रूहि' इति तेनाच्युतप्रेक्षेण साक्षेपमुक्तस्तत्सर्वमाख्यायात्मानं जेतुं प्रवृत्तानामच्युतप्रेक्षसपक्षशिष्याणामनुमानानां प्रत्यनुमानैरुत्सादनादनुमानतीर्थाभिधामासाद्य विद्याब्धिवादिसिंहौ वादिग्रामसिंहौ विजित्य पूर्वभाष्यमपनुद्य प्रार्थयते सतीर्थ्याय सूत्रार्थमभिधायाथ दक्षिणां दिशं गत्वा विष्णुमङ्गलक्षेत्रे भिक्षान्ते परीक्षायै भक्षणार्थं दत्तं कदलिफलचयं कन्याकुमार्याख्यतीर्थे रामसेतौ रङ्गनाथं विष्णुसहस्रनाम्नामपि शतार्थं पुनश्च रूप्यपीठं भुक्त्वा गत्वा स्नात्वा दृष्ट्वोक्त्वा समागत्य गीताभाष्यं कृत्वा गुरवे दत्त्वा बदरिकाश्रमगमनायानुज्ञामादाय कौबेरीं दिशमवतस्थे ।

तीर्त्वा जह्नुसुतां ततोऽणुवदरीमासाद्य नारायणं
नत्वा भाष्यमदादुपायनतया श्रीगीतिकाया अयम् ।
तत्रादौ खलु शक्तितः परमसौ प्रोत्सादयंल्लेशतः
शब्दं तत्र निधाय पाठय जनानित्यब्रवीत्तं हरिः ॥ १३ ॥

तं काष्ठमौनव्रतमाचरन्तं व्यासो निशि स्वप्रभया दिगन्तान् ।
प्रभासयन्प्राप्य ममाश्रमान्तमेहीत्युदीर्यान्तरधान्महात्मा ॥ १४ ॥

---

अच्युतप्रेक्षाय ॥११॥ अथेति । अमितमतिः पूर्णप्रज्ञः सँस्तदधिपस्य रूप्यपीठेशस्याज्ञया सरसीं कासारमागतायां सुरसरितौ(?) भागीरथ्यां समस्तैर्लोकैः जनैः समं साकं विगाहते स अगाहत । समयोगाद्भूते लट् । तस्य विडम्बनमिह लोके विचित्रमिति स्फुटम् ॥१२॥ सपक्षः सखा । अनुमानानां कृद्योगात्कर्मणि षष्ठी । वादिग्रामसिंहौ श्वसदृशवादिनावित्यर्थः । सतीर्थ्याय सहाध्यायिने । कदलीफलचयादीनां पदानां भुक्त्वेत्यादिषु क्रमेणान्वयः । कौबेरीं दिशमुत्तरां दिशम् । उपायनतया उपग्राह्यत्वेन । 'उपायनमुपग्राह्यमुपहारस्तथोपदा' इत्यमरः ॥ १३॥१४ ॥ महीध्रः पर्वतः । करटः गण्डः ।

तदनन्तरमसौ शिष्येभ्यः स्वगमनं लेखनेन निवेद्य मरकतमणिमयमहीध्रमहितमतङ्गजकरटतटपाटनपटुतरनखरकण्ठीरवमुखरमुखरितकन्दरान्तर्निलीनहरिणगणेऽद्भुततरशब्दायमानशार्दूलपोतावलोकनपरित्रासधावल्लुलायगवयकुले प्रत्यन्तपर्वतवत्परिदृश्यमानावश्यायसमुदायदूरीकृतदिनकरकृत्ये प्रावृट्समयकृतजनपदसंचरणजनितायासशमाय विश्रान्तमिव वारिदवृन्दं वहति हिमवति गच्छन् स्वविरहासहिष्णुतया पृष्ठत एव प्राप्तं सत्यतीर्थं स्वहस्तवायुनैव निजस्थानं प्रापय्य पुरतो गत्वा सकलमुनिगणमध्यमध्यासीनमिव वृन्दारकवृन्दपरिवृतं परमेष्ठिनमसमानं व्यासं नत्वा तेन सकलपुराणभारतसूत्रार्थं विज्ञाय तत्रैव तपसा स्थितमिव धर्मपुत्रं प्रणम्य तेन सूत्रभाष्यकरणायानुज्ञातः कृष्णानुमत्याणुबदरीमासाद्य विरच्य कुभाष्यदूषकं हरिगुणप्रकाशपोषकं भाष्यं पुनरपि रजतपीठमागत्य सख्येऽच्युतप्रेक्षाय च तद्भाष्यमाचख्यौ ।

ततोऽमितमतिर्यज्ञविघ्नकर्तॄन्निवारयन् ।
याजयामास मेधावी स्वीयमध्यापकात्मजम् ॥ १५ ॥

पुनरपि बदरिकाश्रममासाद्य व्यासमानम्य रूप्यपीठमाजगाम । कदाचिदसौ मध्येमार्गं सागसमीश्वरदेवं परवशखननमकरोत् । कदाचिदसौ स्वकटिभागावलम्बिनः शिष्यानभिघातिसमागतिशङ्कयापगतोडुपामगाधामपमरापगामतारयत्स्वयमप्यतरत् । अथ भटवृन्दयवनराजयोर्दण्डराज्ययोग्यधीविषयो बभूव । क्वापि चोराणां निजकरकृतपटपिण्डे रिक्थधियमुत्पाद्य परस्परमघातयत् । पुनः क्वाप्ययमुपेन्द्रतीर्थाभिधमस्करिणा तस्करशतं तिरस्कारयांचकार । पुनः क्वापि मोषकपुरतः सशिष्यैः सममौपलत् । शार्दूलाकारं दानवशार्दूलं करतलेन जघान । प्रतिमाः सितशिलामयीराप

---

मुखरो ध्वनिः । शब्दायमानः शब्दं कुर्वाणः । 'शब्दवैरकलह–'इत्यादिना क्यङ् । पोतः शिशुः । असमानं समशून्यम् । कृष्णानुमत्या व्यासानुमत्या । सख्ये सतीर्थ्याय ॥ १५॥ अभिघातिः(ती) शत्रुः । उडुपं प्लवः । आपमुदकसमूहम् । अमरापगां गङ्गाम् । रिक्थधियं द्रव्यबुद्धिम् । मोषकाः तस्कराः । औपलत् उपल इवाचरत् । उपलशब्दात्सदृशाचारे क्विप् । लुङ् । दानवशार्दूलं दैत्यश्रेष्ठम् । आकल्पो भूषणम् । गीर्वाणतरङ्गिण्या गङ्गया

नारायणात् । महाभारततात्पर्यनिर्णयकृतौ व्यासानुज्ञामाददे । हस्तिनपुरगतमठस्थः संकल्पार्थमनल्पाकल्पया तरुणीरूपिण्या धरणीं भित्त्वागतया गीर्वाणतरङ्गिण्या प्रणुतोऽभूत् । कुरुक्षेत्रे स्वीयानि कुन्तीकुमारावस्थायां धृतान्यायुधानि कुन्तादीन्यन्तेवासिजनेभ्यो दर्शयामास । तत्र गङ्गोत्तमाङ्गेनाङ्गीकृतविप्ररूपेणाङ्गीचकार क्षणेन दत्तां भिक्षाम् । कचिच्चतुःसहस्रगुरुरम्भाफलानि त्रिंशत्कुम्भपूर्णपयसा सह परीक्षकेण दत्तानि बुभुजे । गानेन शुष्कतरुं सफलपुष्पमकरोत् । किं बहुना । सकलऋषिसमेतः शेषोऽपि त्रिविक्रमपण्डितपुण्डरीकशार्दूलादिसकलवादिजनजेतुः समस्तवेदार्थनिर्णयकर्तुरस्यानन्दतीर्थस्यानन्दतीर्थं श्रुत्वा निजलोकमासाद्य तत्फलं पृच्छद्भ्यः सनकादिभ्यस्त्रिदोषवर्जितमविकुण्ठितानन्दाभिवृद्धिकरं वैकुण्ठमेवैतद्व्याख्याश्रवणादिफलमभिदधे ।

कलं गात्रं नेत्रं कमलरुचिपात्रं दनुजजि-
द्गुणश्रेणीवाणी खलमतकृपाणीसहचरी ।
सतां हृद्या विद्या सरणिरनवद्याब्धिदुहितुः
पतिर्यस्योपास्यो हिमकरसमास्यो जयतु सः ॥ १६ ॥

मुहुर्मध्वं विध्वंसितखलदुरध्वं सुमनसां
मनोवृन्दे संदेहहरमिह वन्दे गुणनिधिम् ।
रमानाथे नाथे निरतमपि नाथे मम हरौ
दृढा भक्तिर्भुक्तिस्त्विह भवतु मुक्तिस्तत इति ॥ १७ ॥

---

गङ्गोत्तमाङ्गः शिवः । क्षण उत्सवः । बुभुजे । 'भुजोऽनवने' इत्यात्मनेपदम् । आनन्दतीर्थमानन्दकरशास्त्रम् । अविकुण्ठितोऽक्षतः ॥ **कलमिति** । यस्य गात्रं शरीरं कलं लक्षणवत् । कलाशब्दादर्शआद्यच् । मधुरं वा । नेत्रं कमलरुचेः पात्रम् । दनुजजितो विष्णोर्गुणश्रेणी यस्यां तथोक्ता वाणी खलानां मतस्य कृपाणीसहचरी कर्तरीसखी । विद्या अनवद्या अत एव सतां हृद्या अब्धिदुहितुर्लक्ष्म्याः पतिरुपास्यः स हिमकरस्य सममास्यं यस्य तथोक्तः । जयतु । लोट् ॥१६॥ **मुहुरिति** । विध्वंसितः खलानां दुरध्वो दुर्मार्गो येन तथोक्तम् । सुमनसां सतां मनोवृन्दे यः संदेहस्तं हरतीति तथोक्तम् । गुणानां निधिं मध्वं वन्दे । किं चेत्यप्यर्थः । रमाया नाथे स्वामिनि अनाथे न विद्यते नाथो यस्य तस्मिन् । अस्य ब्रह्मणो रुद्रस्य वा नाथे वा । 'अकारो ब्रह्मविष्ण्वंशकमठे-

मध्वेनाद्वैतराद्धान्तध्वान्तविध्वंसनाविना ।
तेन प्रतिष्ठितामेतां मूर्तिं जानीहि मानिनि ॥ १८ ॥
पुरा पूर्द्वारकात्रासीद्दाशार्हानन्दकारिका ।
मध्येवारिधि गोपस्त्रीलालसेनाभिपालिता ॥ १९ ॥
कदाचित्तत्र देवक्या बालकेलीः प्रदर्शय ।
इत्युक्तो रुक्मिणीकान्तः शुद्धान्ते बालकोऽभवत् ॥ २० ॥
तदङ्कमारुह्य हसंस्तदास्यं पश्यन्स्तनं तत्र पपौ मुकुन्दः ।
तदानभिज्ञा विवशान्तरा सा सुखाम्बुराशौ विजहार देवी ॥ २१ ॥
दध्यमत्रं विभज्याथ नवनीतं प्रभक्षयन् ।
बिडालेभ्यो ददद्भूयो वैशाखं नेत्रमाहरत् ॥ २२ ॥
कालमल्पं विहृत्यैवमत्यजद्बालकाकृतिम् ।
हृष्टाङ्गी देवकी दृष्ट्वा विस्मयं प्रययौ मुहुः ॥ २३ ॥
विलोक्य भैष्मी बत बालरूपिणं सदा तदभ्यर्चनकाङ्क्षया सती ।
कृष्णाज्ञया निर्जरशिल्पिना मुदा निर्माययामास तदा तदाकृतिम् ॥ २४ ॥
रुक्मिण्यार्चितकृष्णार्चामर्जुनो द्वारकास्थिताम् ।
कृष्णावतारेऽवसितेऽस्थापयद्रुक्मिणीवने ॥ २५ ॥

---

ध्वङ्गणे रणः' इति रत्नमाला । हरौ निरतं सक्तं मध्वमित्यर्थः । मम हरावित्यनुषज्यते । दृढा भक्तिरिह लोके भुक्तिर्भोगस्ततो जन्मान्तरे(न)मुक्तिर्भवतु इति नाथे याचे । 'नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु' इत्यस्माल्लट् ॥ १७ ॥ **मध्वेनेति** । अद्वैतराद्धान्तोऽद्वैतसिद्धान्त एव ध्वान्तं तस्य विध्वंसनेऽविना सूर्येण । 'अवयः शैलमेषार्काः' इत्यमरः । तेन प्रतिष्ठितामेतां मूर्तिं विग्रहं कृष्णप्रतिमामित्यर्थः । हे मानिनि जानीहि ॥ १८ ॥ पूः पुरी । अत्र भूलोके । दाशार्हा यादवाः । गोपस्त्रीलालसेन कृष्णेनेत्यर्थः ॥ १९ ॥ शुद्धान्तेऽन्तःपुरे । 'शुद्धान्तश्चावरोधश्च' इत्यमरः ॥ २० ॥ तदङ्कं देवक्युत्सङ्गम् । सा देवकी ॥२१॥ दध्यमत्रं दधिपात्रम् । वैशाखं मन्थनदण्डम् । 'पात्रामत्रं च भाजने' इति, 'वैशाखमन्थमन्थानमन्थानो मन्थदण्डके' इति चामरः । नेत्रं मन्थनदाम । 'नेत्रं मथिगुणे वस्त्रे' इति विश्वः ॥२२॥२३॥ निर्जरशिल्पिना । विश्वकर्मणेत्यर्थः । तदाकृतिं कृष्णाकारम् ॥ २४ ॥ कृष्णार्चां कृष्णप्रतिमाम् । 'प्रतिमानं प्रतिबिम्बं प्रतिमा प्र-

गोपीचन्दनलिप्तां तां गोपीचन्दनबुद्धयः ।
सांयात्रिकाः समादाय समीपेऽस्य समाययुः ॥ २६ ॥

निमज्जद्वारिधावत्र मध्वाह्वस्य महात्मनः ।
मुनेर्दशान्तवातेन तीरं प्रापोडुपं तदा ॥ २७ ॥

प्रगृह्यानन्दतीर्थस्तां प्रतिष्ठाप्य मुदान्वितः ।
नागासनस्य निकटेऽपूजयत्प्रतियातनाम् ॥ २८ ॥

पूजयन्त्यधुनाप्येनां तस्य शिष्यकुलोद्भवाः ।
अष्टौ मस्करिणः शुद्धा जानीहि रमणीमणे ॥ २९ ॥

एवमसौ कलगीतस्तया सह सकलधरणीमण्डलमालोक्य तं गोपिकाकामुकं प्रणम्य तदागतिवृत्तान्तं कान्तायै निवेद्य तेनानुगृहीतः स्वनगरमुपगम्य लीलागृहमध्यास्ते स ।

जलजनिजनिजायाप्रेमपाकेन गोपीजनमनसिजकेलीलम्पटे लम्पटेन ।
गुहपुरनिलयेन प्रोद्धृतः सारबिन्दुः सुरकुसुममरन्दे चारुचम्पूप्रबन्धे ॥

इति श्रीमद्घटिकाशत[शत]घण्टाविहिताष्टभाषासरसकविताचरणनिपुणस्य वासुदेवयोगीश्वरस्यान्तेवास्यन्यतमस्य गुहपुरवासशर्मणः कृष्णशर्मणश्चन्द्रदेवशर्मणश्च कृतौ मन्दारमरन्दे चम्पूप्रबन्धे सारबिन्दुर्द्वितीयः समाप्तिमगमत् ।

---

श्लिष्टबिन्दुः ।

**अथाधुना श्लिष्टबिन्दौ श्लेषभेदान्प्रदर्शये ।**
**अनेकार्थस्फूर्तियोगः श्लेषः स द्विविधो मतः ॥**

---

तियातना प्रतिच्छाया । प्रतिकृतिरर्चा पुंसि प्रतिनिधिः' इत्यमरः ॥ २५ ॥ 'सांयात्रिकः पोतवणिक्' इत्यमरः । अस्य रूप्यपीठपुरस्य ॥ २६ ॥ दशान्तवातेन वस्त्रान्तवायुना । 'दशावस्थादीपवर्त्योर्वस्त्रान्ते स्युर्दशा अपि' इति मेदिनी । 'उडुपं तु प्लवः कोलः' इत्यमरः ॥ २७ ॥ प्रतियातनां प्रतिमाम् ॥ २८ ॥ मस्करिणो यतयः ॥ २९ ॥ 'अधिशीङ्स्थासां कर्म' इति लीलागृहस्य कर्मत्वम् ॥ जलजनीति व्याख्यातम् ॥ इतिमन्दारमरन्दव्याख्यायां माधुर्यरञ्जन्याख्यायां गूढकर्तृकायांसारबिन्दुर्द्वितीयःसमाप्तः॥

**अथेति** । मङ्गलार्थेऽथशब्दः । श्लेषसामान्यलक्षणमाह—**अनेकार्थेति** । अनेकार्थानां स्फूर्तिर्बोधो येन सोऽनेकार्थस्फूर्तिः शब्दस्तस्य योगो योजनम् । श्लेष इत्युच्यते इत्यर्थः । तथा च 'अनेकार्थबोधजनकशब्दयोगत्वं श्लेषसामान्यलक्षणम्' । तं विभजते—**स इति** । सभ-

सभङ्गाभङ्गभेदेन तौ द्वौ च त्रिविधौ पुनः ।
नामगो धातुगावेतद्द्वयगाविति भेदतः ॥
शब्दभेदादर्थबोधे सभङ्गश्लेष इष्यते ।
शब्दाभेदेऽप्यनेकार्थबोधे चाभङ्ग इष्यते ॥

नामगतसभङ्गश्लेषो यथा—

ततः किल कलगीतप्रेयसी कलाज्यायसी गीतश्रेयसीनाम्नी प्रसादसीम्नि प्रियाख्यानप्रस्तावनायां नर्मसखीरिदमवादीत्—

'वरतालसदृक्षेण द्योलोकसुहृदावृतम् ।
शिरःफलसमूहेन मयालोकि महीतलम्' ॥ १ ॥

---

ङ्गाभङ्गभेदेनेति। सभङ्गश्लेषाभङ्गश्लेषभेदेनेत्यर्थः। पुनस्तदुभयमपि विभजते—तौ द्वाविति। एतद्द्वयगाविति। नामधातूभयगतावित्यर्थः॥ सभङ्गश्लेषं लक्षयति—शब्दभेदादिति। पदविभागादित्यर्थः। अर्थबोधेऽनेकार्थबोधे। तत्र पञ्चम्याः प्रयोज्यत्वमर्थः। तस्यार्थबोधेऽन्वयः। तथाच स्वनिष्ठैकार्थबोधप्रयोजकविभागभिन्नस्वनिष्ठविभागप्रयोज्यार्थबोधजनकत्वसंबन्धेन शब्दविशिष्टशब्दयोगत्वं सभङ्गश्लेषलक्षणं बोध्यम्। उभयत्र स्वपदं शब्दपरम्। स्वं वरतालसदृक्षेणेति पदं तन्निष्ठो य एकविधोऽर्थबोधप्रयोजकविभागः 'वरताल—सदृक्षेण' इति विभागस्तद्भिन्नः स्वनिष्ठो यो विभागः 'वरता लसत् ऋक्षेण' इति विभागस्तत्प्रयोज्यो योऽर्थबोधः। उत्तमत्वेन प्रकाशमाननक्षत्रयुक्त इति बोधस्तज्जनकत्वसंबन्धेन तादृशशब्दविशिष्टो यः शब्दः 'वरतालसदृक्षेण' इति शब्दस्तत्संबन्धत्वं श्लेष इति। लक्षणसंगतिः। विभागभिन्नविभागाप्रसिद्ध्यासंभववारणायैकत्वमर्थबोधप्रयोजकविभागे विशेषणम्। पदानां कृत्यं तु सुगममेव। ननु विभागभिन्नविभागाप्रसिद्ध्या सुपर्वाण इत्यादावव्याप्तिरिति चेन्न। तादृशसंबन्धेन शब्दविशिष्टशब्दसंबन्धत्वसमानाधिकरणश्लेषत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्। श्लेषत्वमादायाभङ्गश्लेषेऽतिव्याप्तिवारणाय श्लेषत्वव्याप्यत्वं जातिविशेषणम्। अभङ्गश्लेषं लक्षयति—शब्दाभेदेऽपीति। एकार्थबोधप्रयोजकविभागभिन्नविभागाभावेऽपीत्यर्थः। अनेकार्थबोधेऽन्यार्थबोधे। तथा च स्वनिष्ठैकार्थबोधप्रयोजकविभागभिन्नविभागाप्रयोज्यान्यार्थबोधजनकत्वविशिष्टशब्दसंबन्धत्वमभङ्गश्लेषलक्षणम्। एकार्थकघटादिपदघटितवाक्यवारणायान्यत्वमर्थविशेषणम्॥ यथाक्रममुदाहरति—नामगतसभङ्गश्लेषो यथेत्यादिना। कलगीतस्य गन्धर्वस्य प्रेयसी प्रिया। कलाभिर्ज्यायसी श्रेष्ठा। नर्मसखीः क्रीडासखीः। वरतालेति। वरतालसदृक्ष उत्तमतालवृक्षसदृशः। अन्यत्रोत्तमत्वेन प्रकाशमाननक्षत्रयुक्तः। तेन। अतएव द्योलोकस्यान्तरिक्षलोकस्य सुहृदा मित्रेण। आकाशलोकसदृशेनेति यावत्। गगनचुम्बितेनेति वा। शिरःफलसमूहेन

यत्र च कृतविटपानमना उद्यानतरवो न सुन्दरीजनः । विपदाक्रान्तः कुलायो न धनिकलोकः । वर्तते नवन्धनं विदुषां न चोराणाम् । यत्र च वैनतेय इव नागमाधिक्षेपकारी सुमनःसमूहः । किं चाराम इव विलसद्रुचयो विमत्सराः । वाक्प्रचार इवापरुषो विप्राः ।

धातुगतसभङ्गश्लेषो यथा—

क्वचन कौचिद्दम्पती 'मदीयेष्टप्राप्तिश्चेन्मुरारे, तव पादारविन्दं सदा पूजयेव' इत्यवदताम् । साधुवृन्दमपि वदति स्म । क्वचिदापन्नपुत्रो जनः 'शतेन सेवेय विपन्निवृत्तिश्चेद्धरिम्' इत्युक्त्वा 'अहं त्वमपि पुत्र, तमेव माधवं शरणम्' इति बोधयति स्म ।

---

नारिकेलवृन्देन । 'खानोदको नारिकेलः करकाम्भाः शिरःफलः' इति त्रिकाण्डशेषः । आवृतं युक्तं महीतलमालोकि । 'लोकृ दर्शने' इत्यस्माच्चिण् ॥ **कृतविटपानमना इति** । एकत्र कृतं विटपानां शाखानामानमनं यैस्तथोक्ताः । अन्यत्र कृतं विटेषु पानेषु च मनो यस्य स तथोक्तः । उद्यानतरव आरामस्थवृक्षाः । सुन्दरीजनः स्त्रीजनः । नेति निषेधे । **विपदाक्रान्त इति** । वीनां पक्षिणां पदैराक्रान्तः । अन्यत्र विपत्त्या आक्रान्तः । कुलायो नीडं पक्षिगृहमित्यर्थः । नवं धनं नूतनं धनम् । अन्यत्र नेति भिन्नम् । वबयोरभेदाद्बन्धनं निगडादिबन्धः । चोराणां न वर्तते इति न वर्तत एवेत्यर्थः । वैनतेयो गरुडः । नागानां मायाः श्रिया अधिक्षेपकारी । अन्यत्रागमानां वेदानामधिक्षेपकरी न । सुमनःसमूहः सज्जनचयः । आराम इवोपवनमिव । विलसतां द्रूणां वृक्षाणां चयो यस्य तथोक्तः । अन्यत्र विलसन्ती रुचिः कान्तिर्येषां ते । विं विष्णुं लसन्ती श्लिष्यन्ती रुचिः प्रीतिर्येषामिति वा । हरौ प्रीतिं कुर्वन्त इत्यर्थः। 'लस श्लेषणक्रीडनयोः' इत्यस्माच्छतृप्रत्ययः । विमत्सराः वियन्ति पक्षियुक्तानि सरांसि यस्मिन् स तथोक्तः । अन्यत्र मात्सर्यरहिता इत्यर्थः । वाक्प्रचारः स्त्रीयवचनप्रचार इवापरुषो मृदुलः । अन्यत्रापगता रुट् येभ्यस्ते तथोक्ताः॥ धातुगतसभङ्गश्लेषमुदाहरति—**क्वचनेत्यादिना।** दम्पतीपक्षे पूजयेव । 'पूज पूजायाम्' इत्यस्मात्स्वार्थे णिजन्तात्परस्मैपदं विधिलिङुत्तमपुरुषद्विवचनम् । साधुवृन्दपक्षे पूजये इति वर्तमाने लडात्मनेपदोत्तमपुरुषैकवचनम् । अवेति रक्षणार्थकादवधातोर्लोट् मध्यमपुरुषैकवचनम् । आपन्न आपद्युक्तः पुत्रो यस्य स जन इत्यर्थ आपन्नपुत्र इत्यस्य । शतेन शतद्रव्येण । हरिं सेवेय । सेवनार्थकात् षेवृधातोर्विधिलिङुत्तमपुरुषैकवचनम् । इति एवंप्रकारेणोक्त्वा । हे पुत्र, त्वमपि तमेव माधवं शरणमय व्रज । 'इटकिटकटी गतौ' इत्यत्र गत्यर्थकात्प्रश्लिष्ट इधातोर्लोट् मध्यमपुरुषैकवचनम् । अहं तमेव माधवमित्यनुषज्यते । सेवे । षेवृधातोर्लडात्मनेपदोत्तमपुरुषैकवच-

नामधातूभयगतसभङ्गश्लेषो यथा—

यत्र च सुवर्णयति कामिलोकः कामिनीजनम्, छन्दःशास्त्रमपि। स्तनति भटानां क्ष्वेलितम्, वृद्धवाराङ्गनावृन्दं च। विहितदशनति कुन्दकदम्बम्; मुनिकदम्बं च । अपि वासवन्ति धनवन्तो धान्यानि च ।

नामगताभङ्गश्लेषो यथा—

किं च नक्षत्रपदव्य इव रमणीयहस्तश्रवणाः, सत्कविकाव्यरचना इव सालंकाराः कामिन्यः, पर्वत इव मदनाधिष्ठिते, समुद्र इव संजातलावण्ये, यौवने वसन्तं कान्तमुपासते ।

धातुगताभङ्गश्लेषो यथा—

यत्र च दीव्यति कान्ताभिर्युवजनो मणिमयभित्तिभिः प्रासादो वारमृगाक्षीजनोऽप्यक्षैर्मुनिजनोऽपि वेदवचोभिर्हरिम् । अपि च ज्ञपयति शत्रुवर्गं मित्रवर्गं च राजकम् ।

नामधातूभयगताभङ्गश्लेषो यथा—

वाञ्छितार्थान्भक्तजनेभ्यो यस्मिन्यजति सति पुनः पुनस्तमेव माधवं भक्तजनोऽपि । किं बहुना। हासा अपि शारदाकाशतटानीव भवन्ति । एवं सुन्दरतरवचोविलासमस्या गीतश्रेयस्याः सम्यगाकर्ण्य सानन्दं नर्मसखीजनाः सर्वे तां संमानयांचक्रुः ।

---

नम् । तथा च 'सेवेय' इत्यत्रैकदा न पदच्छेदः । एकदा 'सेवे–अय' इति पदच्छेदः ॥ सुवर्णयति सुष्ठु निरूपयति । अन्यत्र शोभना वर्णाः, यतिर्विश्रामश्च यस्मिंस्तत्तथोक्तम् । स्तनति स्तननमिव मेघगर्जनमिवाचरतीत्यर्थः । आचारेऽर्थे क्विप् । अन्यत्र स्तनयोर्नतिर्नमनं यस्य तत्तथोक्तम् । विहितो योग्यो दशनो दन्त इवाचरति विहितदशनति । अन्यत्र विहिताः कृता दशसंख्याका नतयो नमांसि येन तत्तथोक्तम् । वासवन्ति वासव इन्द्रः स इवाचरन्तीत्यर्थः । अन्यत्र तु निवासयुक्ता इ(नी)त्यर्थः। किंचेत्यप्यर्थः मदनः कामः कपित्थश्च । लावण्यं सौन्दर्यं लवणत्वं च ॥ **दीव्यतीति** । 'दिवु क्रीडा–' इत्यादिधातुः । 'दिवः कर्म च' इति द्वितीया तृतीया च । **ज्ञपयतीति** । 'ज्ञप मारणतोषणनिशामनेषु' इति धातोर्लट् ॥ **यजतीति** । 'यज देवपूजासंगतिकरणदानेषु' इति धातोर्दानार्थकात्कर्तरि शतृप्रत्ययः । अन्यत्र पूजार्थकाल्लट् । **भवन्तीति** । तथा च हासा अपि भवन्ति नक्षत्रवन्ति आकाशतटानीव भवन्ति । वर्तत इत्यर्थः । 'भू सत्ता-

इत्थं मया श्लेषभेदा दिङ्मात्रमिह कीर्तिताः।
ग्रन्थगौरवशङ्कात उन्नेया विबुधैरथ ॥

जलजनिजनिजायाप्रेमपाकेन गोपीजनमनसिजकेलीलम्पटे लम्पटेन।
गुहपुरनिलयेन प्रोद्धृतः श्लिष्टबिन्दुः सुरकुसुममरन्दे चारुचम्पूप्रबन्धे ॥

इति श्रीमद्धटिकाशत[शत]घण्टाविहिताष्टभाषासरसकविताचरणनिपुणस्य वासुदेवयोगीश्वरस्यान्तेवास्यन्यतमस्य गुहपुरवासशर्मणः कृष्णशर्मणश्चन्द्रदेवशर्मणश्च कृतौ मन्दारमरन्दे चम्पूप्रबन्धे श्लिष्टबिन्दुस्तृतीयः समाप्तिमगमत्।

---

चित्रबिन्दुः।

अत्राधुना चित्रबिन्दौ क्रमाद्यमकचित्रयोः।
वक्ष्यते लक्षणं भूयः सोदाहरणगुम्फनम् ॥
स्वरव्यञ्जनसंबद्धवर्णाद्यावर्तने सति।
यमकं तत्तु पादाद्यादिस्थित्या बहुधा मतम् ॥

आदौ यथा—

कमलापतिपदयुगलं कमलाभेदोपपादकं रुचिभिः।
कमलाकरकेलौ सा कमलाक्षी राधिका जगृहे ॥ १ ॥

मध्ये यथा—

विधुमुखी दवधूदधिविप्लुतावददमन्दवधूजनकाङ्क्षितम्।
सरभ यादव धूतगुणेतर सरशरादव धूतहृदं जनम् ॥ २ ॥

---

याम्' इत्यस्माल्लट्। एषु सर्वत्र क्रियावाचकपदावर्तनं बोध्यम्। इमं बिन्दुमुपसंहरति—**इत्थमिति** ॥ जलजनीति पद्यं पूर्ववदेव व्याख्येयम् ॥ इति मन्दारमरन्दव्याख्यायां माधुर्यरञ्जन्याख्यायां गूढकर्तृकायां श्लिष्टबिन्दुस्तृतीयः समाप्तः ॥

उपोद्घातसंगत्या चित्रबिन्दुमुपक्रमन्प्रतिजानीते—**अत्रेति**। वक्ष्यमाण इत्यर्थः ॥ यमकमाह—**स्वरव्यञ्जनेत्यादिना**। तथा चासकृदेकानुपूर्वीकवर्णसमूहघटितत्वमिति भावः। इदं स्वरूपलक्षणं पद्ये समन्वेति—**पादाद्यादिस्थित्येति**। आदिपदेन मध्यान्तादेर्ग्रहणम्। तथा च यमकं पादादिगपादमध्यगपादान्तगत्रिपादगद्विपादगान्तादिगान्तमध्यगादिभेदेन बहुविधमित्यर्थः। तदुदाहरति—**आदौ यथेत्यादिना**। पादादिगं यथेत्यर्थः। एवमग्रेऽपि। **कमलापतीति**। कमलाक्षी सा राधिका रुचिभिः कान्तिभिः। करणे तृतीया। कमलस्याभेदोपपादकं कमलापतेः कृष्णस्य पदयुगलं कर्म कमलाकरकेलौ सरःक्रीडायां गृजहे ॥ १ ॥ **विधुमुखीति**। दवधूदधौ विरहसमुद्रे वि-

अन्ते यथा—

माधवमसदामधुरंधरमवनितलस्थदैत्यदामधुरम् ।
भज हृदि मुदा मुधुरञ्जितभणितं हरन्तमम्बुदामधुरम् ॥ ३ ॥

कन्ताद्योर्यथा—

न हरिं कमलाकलितं कमलाकलितं वनं च पश्यन्त्याः ।
नयनं कमलाकलितं कमलाकलितं बभूव च सरोऽपि ॥ ४ ॥

एवमादिरीत्या द्वित्र्येकपादयमकेषु भेदा ऊह्याः ।

पादद्वये यथा—

शरवृन्दे प्रपतामि च शरवृन्दे पतति तापमस्य न सहेऽहम् ।
शम्बररिपुविद्यायाः शंबरसमाश्रयणमिह तव युक्तम् ॥ ५ ॥

इदमादौ । अन्ते यथा—

संरक्षितोऽसि विरहानलतो भवत्या
सद्रत्नहारविलसत्कुचकुम्भवत्या ।

---

प्लुता निमज्जन्ती विधुमुखी चन्द्रानना काचिद्गोपी कर्त्री अमन्देन वहुना वधूजनेन काङ्क्षितमपेक्षितम् । कर्मणि क्तः । कर्म । कृष्णमिति यावत् । स्मरस्य मेव भा यस्य तस्य संबुद्धिस्तथोक्तम् । धूता उत्सृष्टा गुणेतरे दोषा यस्य तथा । हे यादव कृष्ण, स्मरशराद्भूतं हृदयं यस्य तथोक्तम् । जनमस्मदीयगोपिजनमित्यर्थः । मामिति वा अव रक्षेत्यर्थः ॥२॥ **माधवमिति** । पिता पुत्रं बोधयति—हे पुत्र, असतां खलानामामा रीतिस्तस्यां धुरंधरं समर्थमवनितलस्थदैत्यदामधुरं भूतलस्थितदानवपङ्क्तिभारं हरन्तं संहरन्तं मधुवदमृतवद्रञ्जितम् । कर्तरि क्तः । भणितं भाषणं यस्य तथोक्तम् । अम्बुद इव आ सम्यक् मधुरं मनोहरं माधवं हृदि मुदा भज । 'भज सेवायाम्' । लोट् ॥ ३ ॥ **न हरिमिति** । विप्रलब्धगोवर्णनमिदम् । कमलया लक्ष्म्या कलितं युक्तं हरिं कृष्णं न पश्यन्त्याः कमलैः कुरङ्गैः आकलितं वनमारामं पश्यन्त्या गोप्या नयनं नेत्रं कमलेन जलेन आकलितं संबद्धं बभूव । सरोऽपि कमलैः कुसुमैरकलितं रहितं बभूव । चन्द्रः उदयं प्रापेत्यर्थः । अत्र कमलकुसुमराहित्येन चन्द्रोदयव्यञ्जकादर्थशक्तिमूलो वस्तुना वस्तुध्वनिः ॥ ४ ॥ **शरवृन्द इति** । मदीये पाण्डुरङ्गविलासे विरहिण्याः सुन्दर्या इव सुक्तिः । अस्य कामस्य शरवृन्दे बाणसमूहे पतति सति अहं तापं न सहे । किं चेति चार्थः । शरवृन्दे उदकसमूहे प्रपतामि । **शम्बरेति** । तत्रैव तत्सख्या वल्लव्या वचनमिदम् । इह अधुना शम्बरस्यासुरस्य रिपुणा कामेन विद्याया मर्दितायास्तव शम्बरस्योदकस्य समाश्रयणं युक्तम् । 'शत्रोः शत्रुः स्वमित्रं स्यात्' इत्युक्तेरिति भावः ॥ ५ ॥ **संरक्षित इति** । तत्रैव सुन्दरीं घटयित्वा उक्तवतीं वल्लवीं प्रति कृष्णस्योक्तिरियम् । अन्ये सुहृदो

त्वामेव मित्रमहमम्बुरुहाक्षि मन्ये
किं तैर्भरन्ति सुहृदः खलु कुक्षिमन्ये ॥ ६ ॥

पादत्रये यथा—

नस्यं नयनविनाशं तनुते भुक्त्यात्मनापि न विना शम् ।
किंत्वज्ञानविनाशं तस्मादेतद्बुधोऽपि गृह्णाति ॥ ७ ॥

एकपादे यथा—

प्रथमसंगमगेहनिविष्टया सुदृढनीविनिबद्धकराम्बुजम् ।
सुशयितं धुरि भर्तुरवाङ्मुखं मदनकादनकातरया रयात् ॥ ८ ॥

सामस्त्येन यथा—

विदलितकीचकवपुषं कीचकवपुषः सुतं च बल्लववेषम् ।
बल्लववेषाप्रियकरवेषाप्रियकरमद्य कलयामि ॥ ९ ॥

---

मित्राणि कुक्षिं भरन्ति खलु तैः किम् । न किमपि प्रयोजनं भवतीत्यर्थः ॥६॥ **नस्यमिति ।** नसायां नासिकायां साधु नस्यम् । सप्तम्यन्तात्स्वार्थे यत्प्रत्ययः । 'नसा नस्या च नासिका' इति त्रिकाण्डशेषः । 'तपकिरी' इत्यर्थः । नयनयोर्विनाशं तनुते आत्मना स्वेन नस्येनेति यावत् । विना भुक्त्यापि भोजनेनापि शं सुखं न तनुते । 'पृथग्विनानानाभिस्तृतीयान्यतरस्याम्' इति तृतीया । तथापीति किंत्वित्यर्थः । अज्ञानविनाशं तनुते करोति । तन्द्रीमुत्सार्य जागरूकतामुत्पादयतीत्यर्थः । तस्माद्धेतोरेतन्नस्यं बुधोऽपि गृह्णाति ॥७॥ **प्रथमेति ।** कश्चिन्नवोढायाः स्वीयाया वृत्तान्तं सख्ये ब्रवीति—प्रथमं संगमगेहं सुरतगृहं प्रविष्टया अतएव मदनस्य कादनं कलहः सुरतमिति यावत् । 'कदनं कादनं कलिः' इति कमलकरः । तस्मिन्कातरयाधीरया । कान्तयेत्यर्थात् सुदृढं यथा तथा नीवौ कटिवस्त्रबन्धे निबद्धं कराम्बुजं यस्मिन्कर्मणीति तथोक्तम् । अवाङ्मुखमिति क्रियाविशेषणम् । भर्तुर्धुरि पुरः सु अत्यन्तं शयितम् । भावे क्तः ॥८॥ **विदलितेति ।** मदीये कीचकनिधने इदं पद्यम्—विदलितानि कीचकानां वपूंषि येन तथोक्तम्, कीचकानां सरन्ध्रवेणूनां वं ध्वनिं पुष्णातीति कीचकवपुट् तस्य वायोः सुतं बल्लवस्य सूदस्य वेष इव वेषो यस्य स तथोक्तम् । बल्लववेषस्य गोपालरूपिणः कृष्णस्याप्रियकरो वेषः स्वरूपं येषां तेषामप्रियकरम् । अर्थाद्भीममित्यवगन्तव्यम् । अद्य नाट्यारम्भावसरे कलयामि ध्यायामीत्यर्थः । 'बल्लवौ सूदगोपालौ' इत्युभयत्रापि मञ्जरी । 'आकल्पवेषौ नेपथ्यम्' इत्यमरः ॥ ९ ॥

त्रिरावर्तनं यथा—

कमलयामलया मलयानिलप्रचलयाचलयाचलया तया ।
कलितकुञ्जगृहेऽमृतवीरुधा समुदपादि मनोजमहोत्सवः ॥ १० ॥

एवमेव चतुःपञ्चावर्तनादय उन्नेया इति दिक् ।

**चित्रं स्याद्यदि वर्णानां पद्माद्याकारहेतुता ।**
**तच्चित्रं बहुधात्रास्य दिङ्मात्रं दर्शयामहे ॥**
**विना वर्गेष्वाद्यवर्णद्वितयं शषसा नच ।**
**हलादीनां कृदन्तानां पदानां विनियोजने ।**
**तत्र चित्रं भवेदस्य स्वौजसन्तपदान्वयात् ॥**
**धातोर्लोटो मध्यमस्य परस्मैपदिनः सकृत् ।**
**उक्तस्यैव पदोच्छेदात्स्वौजसन्तेषु चान्वयात् ॥**

यथा—

विशदमहितकीर्तिश्रीप्रभावानिमग्नं
कलितगहनपापे दीर्घसंसारकूपे ।

---

**कमलयेति** । मदीये वैकुण्ठवर्णन इदम् । अचलयाचलया अचलं क्रीडापर्वतं यातीत्यचलयास्तादृशी अचला भूर्यस्यास्तथोक्तम् । असंनिहितभूदेवीकयेत्यर्थः । अमलया निर्दुष्टया कमलया श्रीदेव्या कर्त्र्या । मलयानिलेन मन्दमारुतेन । मलयानिलपदे मन्दमारुतविषयिणी कविरूढिः । प्रचलया संचलयामृतवीरुधामृतलतया कलिते व्याप्ते कुञ्जगृहे गृहसदृशकुञ्जे मनोजमहोत्सवः कामकेलिः समुपादि उत्पादितः । कृत इत्यर्थः ॥ १० ॥ उपसंहरति—**एवमिति** ॥ इति माधुर्यरञ्जन्यां यमकप्रकरणम् ॥

उद्देशक्रमेण चित्रं लक्षयति—**चित्रमिति** । चित्तं राति आदत्ते इति चित्रम् । विस्मयकारीत्यर्थः । तच्च शब्दालंकारः, अर्थालंकारश्च । काव्यस्य तु चित्ररूपशब्दालंकारार्थालंकारतदुभयविशिष्टत्वेन चित्रत्वम् । चित्रमस्यास्तीति चित्रमित्यर्शआदित्वादच् । अत्र तु चित्ररूपशब्दालंकारनिरूपणं बोध्यम् । **पद्मादीति** । आदिपदेन नागगजविभक्तिद्वयादयः(?) । तथा च पद्माद्याकारहेतुभूतवर्णत्वं चित्र(त्व)मित्यर्थः । अस्य चित्रस्येत्यर्थः । चित्रोपायं निरूपयति—**विनेत्यादिना** । **हलादीनामिति** । हलवर्णा आदौ येषां तेषामित्यर्थः । अस्यैतादृशवाक्यस्य । **लोट इति** । लोट्प्रत्ययान्तस्येत्यर्थः । मध्यमस्य मध्यमपुरुषस्य । पदोच्छेदात्पदच्छेदात् । एतत्सर्वमुदाहरणे बोध्यम् । **विशदमहितकीर्तिश्रीप्रभावानिमग्नमिति** । अत्र 'श्रीप्रभाव अनिमग्नम्' इति मारुतिपक्षे पदच्छेदः । 'श्रीप्रभौ आनिमग्नम्' इति चन्द्रसूर्यपक्षे । 'श्रीप्रभावाः निमग्नम्' इति विधिहरिशितिकण्ठपक्षे । कुरुतमुदितमेनमित्यत्रापि

कुरुतमुदितमेनं मारुते चन्द्रसूर्यौ
विधिहरिशितिकण्ठास्त्वं युवा यूयमद्य ॥ ११ ॥

**पृष्ठतो न्युपसर्गादे राज्याद्यन्तसुयोजने ।**
**चित्रं भवेद्भिन्नलिङ्गस्वाद्यन्तसमन्वयात् ॥**

यथा—

ध्वस्ताघालीनिबद्धोरुगुणालीनिहते भवे ।
गातां हरेस्तनुः पादौ चरित्राणि सदा हृदि ॥ १२ ॥

यथा वा—

यशोराजी नितान्तोरुसंपत्पालीनियोगतः ।
अपत्यानि हरेः पादौ लक्ष्मीश्च कुरुतां मम ॥ १३ ॥

**इनीदन्तपदैर्योगे रेफादिपदपृष्ठतः ।**
**भवेच्चित्रं भिन्नलिङ्गस्वौशसन्तसमन्वयात् ॥**

यथा—

सुदानशालिनी राजत्सुजनप्रेयसी रमा ।
केशवस्य च पादाब्जे संपदस्तनुतां मयि ॥ १४ ॥

---

'कुरु तं उदितम्' इत्येकत्र। 'कुरुतम् उदितम्' इत्यन्यत्र। 'कुरुत मुदितम्' इत्यपरत्र पदच्छेदः। अर्थस्तु सुगम एव ॥११॥ **न्युपसर्गादेरिति** । नीत्युपसर्गः आदौ यस्य तस्येत्यर्थः । **राज्याद्यन्तेति**। राजिरादिर्येषां ते राज्यादयः। आलिःअङ्गुलिः वलिः केलिः नीविः नाभिरित्यादयः शब्दा अन्ते येषां तेषामित्यर्थः।**स्वाद्यन्तेति**।सुऔ इत्यादिप्रत्ययान्तेष्वित्यर्थः। **ध्वस्ताघालीति**। ध्वस्ता अघानां पापानामाली समूहो यस्यास्तथोक्तेति तनुविशेषणम्। 'कृदिकारादक्तिनः' इति पक्षे ङीष्। निबद्धा संबद्धा उरुगुणानामाली यस्याः सेत्यपि तनुविशेषणम्। प्रथमैकवचनम्। पादविशेषणे तु द्विवचनम्। चरित्रविशेषणे तु ध्वस्ताघालीनि बद्धोरुगुणालीनीति पदच्छेदः। नपुंसकबहुवचनम्। हरेर्विष्णोस्तनुः कर्त्री। पादौ कर्तारौ। चरित्राणि कर्तॄणि। सदा हृदि गाताम्। 'गाङ् गतौ' इत्यस्मात्प्रार्थनायां लोट्। नित्यं बहु(सर्व)वचनान्तमिदं सर्वत्रान्वेति। प्रवर्ततामित्यर्थः। एवमेवोत्तरत्रापि ॥ १२ ॥ अपत्यानि कर्माणि पादौ। लक्ष्मीश्च कर्तृपदे। **कुरुतामिति**। परस्मैपदे लोटि मध्यम-(प्रथम) पुरुषद्विवचनम्। अन्यत्रात्मनेपदे लोटि मध्यम (प्रथम) पुरुषैकवचनम् ॥ १३ ॥ **इनीदन्तेति**। स्त्रीप्रत्ययप्रकृतिकणिन्यादिप्रत्ययान्तपदैरित्यर्थः। भिन्नलिङ्गस्वौशसन्तसमन्वयादिति। लिङ्गभेदविशिष्टप्रथमैकद्विबहुवचनान्तपदान्वयादित्यर्थः। **सुदानेति**।

आदन्तोत्तरतोऽज्वादेः संध्या शब्दस्य गुम्फने।
भवेच्चित्रं लिङ्गभेदादेकद्विवचनान्वयात्॥
विभासिताविभौघेन चन्द्रलेखा विभासिता।
कुरुपाण्डवयोः सेनासंनिवेशाविवासक्तत्॥ १५॥
कश्यपार्काविव मुदा सेविता वरुणेन या।
तां प्रतीचीं चुचुम्बासौ गोभिः संमान्य चन्द्रमाः॥ १६॥
रामावलिविलासेन हरिणा रमते रमा।
करटाविव गोप्यो वा पुनः पद्मच्छदाविव॥ १७॥

---

सुष्ठुदानशालिनीति राजतां सुजनानां प्रेयसीति रमाविशेषणम्। रमा कर्त्री। सुदानशालीनीति राजत्सुजनप्रेयसीति च नपुंसकलिङ्गकं पदद्वयम्। पादाब्जयोर्विशेषणम्। पादाब्जे च कर्तृणी। सुदानशालिनीरिति सुजनप्रेयसीरिति च स्त्रीलिङ्गद्वितीयाबहुवचनान्तपदद्वयं संपद्विशेषणम्। संपदः कर्माणि। तनुतामिति पदं कुरुतामितिवद्योज्यं पूर्ववत्। 'ढ्लोपे पूर्वस्य दीर्घोऽणः' इति दीर्घः॥ १४॥ **आदन्तोत्तरत इति**। आकारान्तपदाव्यवहितोत्तरमित्यर्थः। अज्वादेः अचः अ इ उ ऋ ए ओ ऐ औ एते (वकारश्च) आदौ यस्य तस्य शब्दस्य संध्या संधिपूर्वकं गुम्फने योजने सति। **विभासितेति**। सेनासंनिवेशपक्षे 'विभासितौ इभौघेन' इति पदच्छेदः। चन्द्रलेखापक्षे 'विभासिता विभौघेन' इतिच्छेदः। इभानां गजानामोघस्तेन। अन्यत्र वकारः शोभावाची सोऽस्यास्तीति विभानां नक्षत्राणामोघः समूहस्तेन। यद्वा वोऽमृतमासामस्तीति विन्यो भाः कान्तयस्तासामोघेन। अमृतमयकान्त्योघेनेति यावत्॥ १५॥ **कश्यपार्काविति**। कश्यपार्कौ कश्यपसूर्यौ मुदा अरुणेन अनूरुणा सेवितौ। प्रतीचीपक्षे मुदा वरुणेन प्रचेतसा सेविता। पालितेत्यर्थः। असौ चन्द्रमा गोभिः संमान्य मानयित्वा चुचुम्ब। अत्र प्रतीचीसंबन्धरूपास्तमये वर्ण्यमानेऽप्रस्तुतपरवनितासक्तपुरुषान्तरप्रतीतेः समासोक्तिरलंकारः। 'अप्रस्तुतपरिस्फूर्तिर्यत्र प्रस्तुतवर्णने। समासोक्तिः' इति लक्षणात्॥ १६॥ **रामावलीति**। 'रामौ अलिविलासेन, रामाः बलिविलासेन' इति द्विधा पदच्छेदः। 'रामा बलिविलासेन' इति रमापक्षे छेदः। वलीनां त्रिवलीनां विलासेन रामा रमणीया रमा लक्ष्मीः। रामावलिविलासेनेत्येकं पदम्। रामाणां स्त्रीणामावलौ विलासो यस्य तथोक्तेन हरिणा कृष्णेन रमते। 'रमु क्रीडायाम्' इत्यस्माल्लट्। करटाविव गजगण्डाविव। एतत्पक्षेऽलिविलासेन भ्रमरविलासेन रामौ रमणीयौ। गोप्यो वा गोपिका इव। 'ववायथा तथैवेवं सामान्ये' इत्यमरः। एतत्पक्षे वलीनां त्रिवलीनां विलासेन रामा रमणीयाः। पद्मच्छदाविव कमलपत्रे इव। एतत्पक्षेऽलीनां विलासेन रामौ रमणीयावित्यर्थः। अत्र 'लिङ्गसंख्याविभेदेऽपि उपमानोपमेयता। विभक्तिः पुनरेकैव उपमानोपमेययोः॥' इत्यनुशासनाच्छ्लेषकृतसाधारणधर्मोपादानविशिष्टोपमानालंकारे वचन-

अजन्तानां हलन्तानां यथायोगं नियोजने ।
विभक्तिभेदाच्चित्रं स्यात्स्वावमूटादिपदान्वयात् ॥

यथा प्रथमायाम्—

प्रकीर्णकचमरीचयः सुरतश्रान्ताङ्गना इवाभाति ।
अपि बहुकर्कारुचयो घोटकशाला इवाचलाधिपतिः ॥ १८ ॥

लोहकारनिषद्याश्च राजन्ते पुरि सर्वतः ।
अनेककृष्णसूच्यश्च नन्दसूनुरिव व्रजे ॥ १९ ॥

प्रथमाद्वितीययोर्यथा—

तमोविध्वंसिनी राजत्कमलानन्ददायिनी ।
हरिनेत्रे तुलयति भानोः किरणसंततिः ॥ २० ॥

---

भेदेऽपि न दोषः॥१७॥ **स्वावमूटादिपदान्वयादिति**। प्रथमैकवचनद्विवचनद्वितीयैकवचनतृतीयाद्यन्वयादित्यर्थः। **प्रकीर्णकेति**। अचलाधिपतिः पर्वतश्रेष्ठः। भातीत्यन्वयः। किंभूतः। सुरतेन श्रान्ता अङ्गना इवेत्येकं पदम्। 'इवेन सह नित्यसमासो विभक्त्यलोपश्च' इत्यनुशासनात्। उपरिसुरतश्रान्तकान्ता इवेत्यर्थः। प्रकीर्णकचमरीचयः कान्तापक्षे प्रकीर्णानां कचानां मरीचिः प्रभा यासां तास्तथोक्ताः। पर्वतपक्षे प्रकीर्णको विस्तृतः चमरीणां चयो वृन्दं यस्मिंस्तथोक्तः। प्रथमैकवचनम्। 'प्रकीर्णकं चामरे स्याद्विस्तृते ना तुरंगमे' इत्यनेकार्थमेदिन्यौ। किंचेत्यप्यर्थः। घोटकशाला इव वाजिशाला इव। बहुकर्काणामनेकशुक्लाश्वानां रुचिर्यासु ता इति बहुवचनम्। पर्वतपक्षे बहूनां कर्कारूणां कूष्माण्डकानां चयो यस्मिंस्तथोक्त इत्येकवचनम्। 'सितः कर्कः' इति। 'कूष्माण्डकस्तु कर्कारुः' इति चोभयत्रामरः॥१८॥**लोहकारेति**। लोहकाराणां निषद्याः। 'आपणस्तु निषद्यायाम्' इत्यमरः। पुरि नगरे सर्वतः सर्वत्र। सार्वविभक्तिकस्तसिः। व्रजे गोकुले नन्दसूनुरिव कृष्ण इव। अनेककृष्णसूच्यः अनेकाः कृष्णाः सूच्यः प्रसेविन्यो यासु ता इत्यापणपक्षे बहुवचनम्। कृष्णपक्षेऽनेकैर्जनैः कृष्ण इति सूच्यः सूचनाविषय इत्येकवचनम्। राजन्ते॥१९॥**तम इति**। भानोः सूर्यस्य किरणानां संततिः कर्त्री। हरेर्नेत्रे कर्मणी। तमोविध्वंसिनी तमो ध्वान्तं विध्वंसयतीति तथोक्ता। ताच्छील्ये णिनिः। स्त्रीत्वात् ङीप्। इति भानुकिरणपक्षे स्त्रीलिङ्गप्रथमैकवचनम्। हरिनेत्रपक्षे तमोऽज्ञानं विध्वंसयत इति तथोक्ते नपुंसकलिङ्गद्वितीयाद्विवचनम्। एवमग्रेऽपि। **कमलेति**। पद्मं लक्ष्मीश्चेत्यर्थः। अत एव तुलयति समीकरोति। नात्रोपमालंकारः। किंतु प्रकृताप्रकृतोभयश्लेषः। तेन 'लिङ्गसंख्याविभेदेऽपि' इत्यनुशासनाद्विभक्तिभेदस्य चात्र सत्वात्कथमुपमालंकार इति शङ्का परास्ता।

सदयः करवालानां वृन्दमन्वकरोन्नृपः ।
विशालकीर्ति ग्रीष्मीयसरोऽपि विदुषां कुलम् ॥ २१ ॥
उत्फुल्लमल्लिकाजालमालिकाबद्धकेशवान् ।
केलीकुपितगोपस्त्रीजनाननुकरोत्ययम् ॥ २२ ॥
पल्लवलालितसुवयो वेश्यावृन्दं भजन्ति चारामाः ।
उल्लसितश्रीकवयस्तुलयन्त्युद्यानमाः सभादेशाः ॥ २३ ॥

---

उपमानत्वेनाप्रकृतस्योपमेयत्वेन प्रकृतस्य च विशेषणमात्रश्लेषाच्छ्लेषालंकारः संगच्छते। तथा चोक्तं प्रतापरुद्रीये—'प्रकृताप्रकृतोभयगतमुक्तं यच्छ्लेषमात्रसाधर्म्यम्। श्लेषोऽयं श्लिष्टत्वं सर्वत्राद्यद्वयेनान्त्यः ॥' इति। अत एव प्रकृताप्रकृतोभयश्लेषविवक्षया विभक्तिवचनभेदेनोक्तं भैष्मीपरिणये—'समदया गजपङ्क्त्या सदृशी नीतिश्च' इति॥२०॥ **सदय इति।** नृपः कर्ता। सदयः दयया सहितः। इति अदन्तप्रथैकवचनम्। अन्यत्र सत् अयो लोहो यस्मिन् तथोक्तमिति सान्तद्वितीयैकवचनम्। अत एव करवालानां कृपाणानां वृन्दमन्वकरोत् अनुससार। विदुषां कुलं समूहः कर्तृ विशालकीर्ति विशाला कीर्तिर्यशो यस्य तदिति प्रथैकवचनम्। अन्यत्र विशाला कीर्तिः कङ्को यस्मिन् तदिति द्वितीयैकवचनम्। ग्रीष्मीयसरः ग्रीष्मकालिकतटाकम्। अन्वकरोदित्यस्यानुकर्षः। 'यशःकर्दमयोः कीर्तिः' इत्यनेकार्थः॥२१॥ **उत्फुल्लेति।** अयं कर्ता। उत्फुल्लानां मल्लिकानां जालस्य मालिकया बद्धाः केशा अस्य सन्तीति तथोक्तः इति तकारान्तप्रथमैकवचनम्। 'न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः' इत्यनुशासनस्यानित्यत्वान्मत्वर्थीय(वति)प्रत्ययः। अन्यत्र उत्फुल्लमल्लिकाजालमालिकाबद्धः केशवो यैः, येषां वा तानिति पुंलिङ्गद्वितीयाबहुवचनम्। अत एव केलौ कुपितान् गोपस्त्रीजनान् अनुकरोति अनुसरति। 'उपसर्गेण धात्वर्थो बलादन्यत्र नीयते। विहाराहारसंहारप्रहारपरिहारवत् ॥' इत्युक्तेः॥२२॥ **पल्लवेति।** आरामाः कर्तारः। पल्लवलालितसुवयः पल्लवैः किसलयैः करणैः लालिता लालनयुक्ताः। अधिकरणे क्तः। शोभना वयः पक्षिणइति इदन्तप्रथमाबहुवचनम्। अन्यत्र पल्लवैर्विटैर्लालितं सुष्ठु वयो यौवनं यस्य तदिति सान्तद्वितीयैकवचनम्। वेश्यावृन्दं कर्म। भजन्ति। सभादेशाः कर्तारः उल्लसितश्रीकवयः उल्लसिता विकसिता श्रीर्येषां ते कवयो येषु। तेइति इदन्तप्रथमाबहुवचनम्। अन्यत्र उल्लसिता श्रीर्यस्य तदुल्लसितश्रीकं वयः पक्षी यस्मिन् तदिति नपुंसकद्वितीयैकवचनम्। अत एव उद्यानं कर्म तुलयन्ति समीकुर्वन्ति। 'पल्लवोऽस्त्री किसलये पुंसि शृङ्गारषिङ्गयोः' इत्यनेकार्थः। 'विविष्किरपतत्रयः' इत्यमरः। 'वयः पक्षिणि बाल्यादौ यौवने च नपुंसकम्' इति मेदिनी। 'आः प्रगृह्यं स्मृतौ वाक्ये

प्रथमातृतीययोर्यथा—

सततालम्बितहरिणा भक्तजनेनाभवद्वनी सदृशी ।
विमलतरवारिभृत्या शरदि सरस्या च वाहिनी सदृशी ॥ २४ ॥

प्रचलद्दुन्दुभिर्नागलोकदेशैः समीकृतः ।
वाहिनीसंनिवेशोऽयं भाति कृष्णमहीभुजः ॥ २५ ॥

प्रथमाचतुर्थ्योर्यथा—

अतिमञ्जुलशयनाभिर्गोपवधूभिः समीकृतः कृष्णः ।
निजसारूप्यं प्रददौ भक्तजनेभ्यः प्रसन्नरामेभ्यः ॥ २६ ॥

---

विस्मये च समुच्चये' इत्यनेकार्थादौ इति विस्मयार्थे॥२३॥ **सततेति**। वनी कर्त्री। 'स्त्री स्यात्काचिन्मृणाल्यादिर्विवक्षापचये यदि' इति कोशादल्पत्वविवक्षायां स्त्रीत्वम् । 'जाते-रस्त्रीविषय-'इत्यादिना ङीष् । अल्पवनमित्यर्थः । उपवनमिति भावः । सतताल‌म्बितह-रिणा सततमालम्बिताः। कर्तरि क्तः । हरिणाः कुरङ्गा यस्यां सेति आदन्तस्त्रीलिङ्गप्रथमैक-वचनम् । अन्यत्र सततमालम्बितः । कर्मणि क्तः । हरिर्येन तेनेति । इदन्ततृतीयैकवच-नम् । अत एव भक्तजनेन सदृशी अभवत्। 'तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्" इति तृतीया । वाहिनी सेना कर्त्री । विमलतरवारिभृत्या विमलस्तरवारिः खड्गो येषां ते भृत्याः भटा यस्यां सेति प्रथमैकवचनम् । अन्यत्र विमलतरस्यात्यन्तस्वच्छस्य वारिणो भृतिर्भरणं यस्यास्तयेति तृतीयैकवचनम् । सदृशी अभवदिति पूर्वेणान्वयः । शरदि शर-दृतौ स्थितयेत्यर्थः । सरस्या कासारेण । 'उद्याने हरिणाः सर्वफलपुष्पलताद्रुमाः' इति वर्ण्यावर्ण्यप्रकरणे कविकल्पलतायां देवेश्वरोक्तेरुद्याने हरिणालम्बितत्वं बोध्यम् । 'कासारः सरसी सरः' इत्यमरः। 'कृपिः खड्गस्तरवारिः शस्त्रो भद्रात्मजश्च सः' इति त्रिकाण्डशेषः। 'सेना नदी च वाहिन्यौ'इति च॥२४॥**प्रचलदिति**। कृष्णमहीभुजः कृष्णराजस्य वाहि-नीसंनिवेशः सेनासंनिवेशः। कर्ता । प्रचलद्दुन्दुभिः प्रचलन्तो दुन्दुभयो यस्मिन् स इति इद-न्तप्रथमैकवचनम्। अन्यत्र प्रचलन् संचलन् दुन्दुः राजसर्पो येषु तैरिति तृतीयाबहुवचनम्। अतएव नागलोकदेशैः पातालप्रदेशैः समीकृतो भाति।'भा दीप्तौ'।लट्।' अथ नागभृद्दुन्दुः' इति त्रिकाण्डशेषः।'दुन्दुर्डुण्डुरहीरणौ'इति कमलाकरश्च ॥२५॥ **अतिमञ्जुलेति**। कृष्णः कर्ता । अतिमञ्जुलशयनाभिः अत्यन्तं मञ्जुले शयः पाणिर्नाभिश्च यस्य तथोक्त इति।इदन्तप्र-थमैकवचनम् ।अन्यत्र अतिमञ्जुलं शयनं सुरतं यासां ताभिरिति तृतीयाबहुवचनम् । अत एव गोपवधूभिः समीकृतः । प्रसन्नरामेभ्यः प्रसन्नानां रामाणामिभ्यः पतिः । यद्वा प्रस-न्नाभी रामाभिरिभ्य आढ्य इति प्रथमैकवचनम् । अन्यत्र प्रसन्नो रामो दाशरथिर्येभ्य-स्तेभ्य इति चतुर्थीबहुवचनम् । अत एव भक्तजनेभ्यः निजसारूप्यं साम्यं प्रददौ ।भक्त-

प्रथमापञ्चम्योर्यथा—

लसद्विपादः पञ्चास्यादविशेषविधायकः ।
नमद्विजाय पाहीति नमश्चक्रे स भास्वते ॥ २७ ॥

एवमेव द्वितीयादिषूह्याः। अक्षरमात्राबिन्दुच्युतकानुलोमप्रतिलोमादयोऽपि ।

जलजनिजनिजायाप्रेमपाकेन गोपीजनमनसिजकेलीलम्पटेलम्पटेन ।
गुहपुरनिलयेन प्रोद्धृतश्चित्रबिन्दुः सुरकुसुममरन्दे चारुचम्पूप्रबन्धे ॥

इति श्रीमद्भटिकाशतशतघण्टाविहिताष्टभाषासरसकविताचरणनिपुणस्य वासुदेवयोगीश्वरस्यान्तेवास्यन्यतमस्य गुहपुरवासशर्मणः कृष्णशर्मणश्चन्द्रदेवशर्मणश्च कृतौ मन्दारमरन्दे चम्पूप्रबन्धे चित्रबिन्दुश्चतुर्थः समाप्तिमगमत् ।

---

जनैरिभ्यः आढ्य इति कृष्णविशेषणमपि भवति । 'शयनं सुरते निद्राशम्ययोश्च नपुंसकम्' इतिमेदिनी । 'इभ्या करेणुशल्लक्योः स्त्रियामाढ्ये प्रियेऽन्यवत्' इत्यनेकार्थः॥ २६॥ **लसदिति** । सः कर्ता । लसद्विपादः लसन्तौ द्वौ पादौ यस्य स इति प्रथमैकवचनम् । अन्यत्र लसन्तं द्विपं गजमत्तीति लसद्विपात् तस्मादिति पञ्चम्येकवचनम् । अत एव पञ्चास्यात्सिंहात् अविशेषविधायकः विशेषाभावविधायकः।समइति यावत् विशेषत्वं च भेदबोधकधर्मत्वम्।'अन्यारादितरर्ते दिक्शब्दाञ्चूत्तरपदाजाहियुक्ते' इति सूत्रेणप्रतियोगिवाचकपञ्चास्यपदात् सप्तमी । अन्य इत्यर्थग्रहणमित्युक्तेः। तथा च प्रतियोगित्वं पञ्चम्यर्थः । तस्य विशेषपदार्थैकदेशे भेदेऽन्वयः।संपन्नो व्रीहिरित्यादौ क्वचिदेकदेशान्वयस्वीकारात्।तदभावपक्षे विशेषपदस्यैव भेदे लक्षणा । तथा च अविशेषविधायक इत्यस्य भेदाज्ञापक इत्यर्थः।इदं तच्छब्दार्थकर्तृविशेषणम् । नमतां द्विजानामयः शुभावहविधिर्येन तस्य संबुद्धिः । नमद्विजायेति संबोधनम् । सूर्योदये सति यज्ञदानस्नानादिशुभावहव्यापाराः प्रवर्तन्ते। पाहीति उक्त्वा भास्वते सूर्याय नमश्चक्रे । भास्वन्तमनुकूलयितुं नमश्चक्र इत्यर्थः। 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति चतुर्थी । क्रियार्थोपपदस्य तुमुन्नन्तस्याप्रयुक्तस्य धातोर्यत्कर्म तत्प्रयोगं विना तदर्थकर्मतया यद्विवक्षितं तद्वाचकपदाच्चतुर्थीति सूत्रार्थः। 'अयः शुभावहो विधिः' इति कोशाददन्तोऽयशब्दः । ग्रन्थगौरवभीत्या उपसंहरति—**एवमिति**। द्वितीयादिषु द्वितीयादिविभक्तिविशिष्टेषु । तथा च द्वितीयान्तस्य तृतीयाद्यन्तान्वयेन तृतीयान्तस्य चतुर्थ्याद्यन्तान्वयेनेत्यादिरीत्योह्या इत्यर्थः ॥ **जलजनीति ।** पद्यं पूर्ववदेव बोध्यम् ॥ इति श्रीमन्दारमरन्दव्याख्यायां माधुर्यरञ्जन्याख्यायां गूढकर्तृकायां चित्रबिन्दुश्चतुर्थः ॥

वन्धविन्दुः ।

अथाधुना वन्धविन्दौ वन्धलक्ष्माणि कानिचित् ।
ब्रूमहे बुधमोदाय गर्भितोदाहृतिक्रमम् ॥
यद्यप्यनेके वन्धास्तु कविप्रौढिमगुम्फिताः ।
तथापि ब्रूमहे कांश्चिन्नागपद्मगजादिकान् ॥
द्वितीयान्त्यौ तथा तुर्यत्रिंशतौ षष्ठषष्टिकौ ।
अष्टमाष्टत्रिंशतौ च दिक्चतुःषष्टिकावपि ॥
द्वादशेन्द्रौ नाट्यचेष्टाद्विचत्वारिंशतौ तथा ।
पीठाष्टषष्टिकौ च षट्चत्वारिंशविंशती ॥
द्वाविंशत्षट्सप्ततिकौ पञ्चाशत्केशवावपि ।
अशीतिषड्विंशती चत्वारिंशत्षष्टषष्टिकौ ॥
साष्टपञ्चाशविंशौ च तौ षट्त्रिंशद्विषष्टिकौ ।
त्रिंशतौ द्विचतुः पूर्वौ तथैव द्विचतुः परौ ॥
पञ्चशतौ चतुश्चत्वारिंशत्सप्ततिकौ तथा ।
अष्टाभिरधिकौ चत्वारिंशत्सप्ततिकौ तथा ॥

---

अथ कविर्वन्धविन्दुमुपक्रमन् प्रतिजानीते—**अथेति**। प्रयोजनमाह—**बुधमोदायेति** । तत्र निमित्तमाह—**गर्भितोदाहृतिक्रममिति** । क्रियाविशेषणमिदम्। **यद्यपीति**। सन्तीति शेषः। **प्रौढिमेति**।प्रौढतेत्यर्थः। प्रौढशब्दाद्भावे इमनिच्प्रत्ययः। **कांश्चिदिति**।ननु पूर्वपदे कानिचिदित्यनेनैव निर्वाहे अत्र कांश्चिदित्यस्य वैयर्थ्यमिति चेदुच्यते । पूर्वत्र कानिचित्पदं लक्षणान्वयि अत्र कांश्चित्पदं वन्धान्वयीति विशेषः । अत एव छत्रचामरवन्धादीनां लक्षणं सुगमत्वान्नोक्तम् ,नागबन्धादीनां लक्षणमुक्तम्।हंसमयूरक्षीरहारमच्छा(?)दिवन्धा नोक्ता इति ध्येयम् । तत्रादौ नागवन्धलक्षणमाह—**द्वितीयान्त्यावित्यादिना** । द्वितीयाक्षरान्त्याक्षरे इत्यर्थः। एवमग्रेऽपि। तुर्यत्रिंशतौ चतुर्थत्रिंशवर्णौ। 'चतुरश्छयतावाद्यक्षरलोपश्च' इति चतुःशब्दाद्यत्प्रत्ययः। अष्टमाष्टमाष्टमश्चाष्टत्रिंशच्चाष्टमाष्टत्रिंशतौ । अष्टन्शब्दात् 'तस्य पूरणे डट्' इत्यनेन जातस्य डटः 'नान्तादसंख्यादेर्मट्' इति मडागमः। दिक् दशमो वर्णः। इन्द्रश्चतुर्दश। नाट्यचेष्टा षोडश। पीठमष्टादश। **षट्चत्वारिंशविंशतीति**।'विंशत्यादिभ्यस्तमडन्यतरस्याम्'इति तमडागमस्य वैकल्पिकत्वाच्चत्वारिंशच्छब्दाड्डट्। **साष्टपञ्चाशविंशौ चेति**। अष्टपञ्चाशदष्टाविंशा-

षट्पञ्चाशद्व्यशीती च सप्तती द्विचतुः परे ।
इमावुभावुभौ वर्णावेकत्वं भजतो यदि ॥
तदेकनागबन्धस्तु स्रग्धरायां भवेद्ध्रुवम् ।
विदग्धहृदयानन्दश्चतुष्कोणाकृतिर्वरः ॥

यथा—

श्रीरामो हर्म्यधामा सततसुमहिमश्रीनतो ज्ञप्रभूतः
सुग्रीवप्रीतये तत्सहजमयममुं भालसत्सायकेन ।
पायान्मां भूभृदीशो वनमिह मिहिरव्रातबाधाद्यभावे
तस्यायन्नाज्ञयायाममशमधिसुखोऽदीनितस्यारिधारा ॥१॥

एवमुत्तरत्रापि नागबन्धभेदेषु यथोचितं लक्षणं परिष्करणीयम् ।

अष्टदलपद्माकारेणैकनागबन्धो यथा—

मुरस्यारातेरुच्चरणशरजामन्दमधुपं
तनो लक्ष्मीवर्यां रचितगुरुपामप्रशमिताम् ।

---

वित्यर्थः। अत्रोक्तानां संख्येयवाचकत्वमेवेति बोधनायाह—इमाविति। स्रग्धराया-मिति । तन्नामकवृत्त इत्यर्थः । एवमेव नागबन्धमुदाहरति—श्रीराम इति। स इति तच्छब्दबलाद्य इति लभ्यते । यो रामस्तस्य दशरथस्य आज्ञया इह भूमौ मिहिराणां कर्तृतासंबन्धेन सत्कर्मवताम्। सत्कर्मकर्तृणामिति यावत्। 'मिहिरः पुंसि पूषणि । नित्यसत्कर्मणि धने वृद्धेऽपि' इति वररुचिः। व्रातस्य वृन्दस्य बाधादीनामभावे। विषयसप्तमीयम् । वनमयन् गच्छन्। 'इटकिटकटी गतौ' इत्यत्र गत्यर्थकात्प्रश्लिष्टइधातोः कर्तरि शतृप्रत्ययः। सुग्रीवस्य प्रीतये तत्सहजं स एव सहजो यस्य तममुं वालिनं भया दीप्त्या लसता सायकेन अयामं संयमरहितम्। गमनोन्मुखप्राणमिति यावत्। अत एव अशं सुखरहितम्। अकरोदिति शेषः । स तादृशः । हर्म्यं धाम यस्य तथोक्तः । तता व्याप्ता सुमहिम्नो माहात्म्यस्य श्रीर्येषां तैर्ब्रह्मादिभिर्नतो नमस्कृतो ज्ञ इव बुध इव चन्द्र इव वा । 'ज्ञो ब्रह्मबुधचन्द्रेषु' इत्यनेकार्थः । प्रभूत उद्गतः । सौम्य इति यावत् । भूभृतां राज्ञामीशः अधिसुखो अधिकसुखः । अदीनितस्य दीनितो न भवतीत्यदीनितः । 'दीङ क्षये' इत्यस्मादधिकरणे क्तः। तस्य। मत्तस्येति यावत्। अरिधारा चक्रधारेतिरूपकम् । अयं श्रीरामो मां पायात् । अत्राद्भुतरसस्य रत्यङ्गत्वाद्रसवदलंकारः। 'रसो यत्र परस्याङ्गं चेत्तत्र रसवान्मतः' इति लक्षणात्। 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्' इति लक्षणात्स्रग्धरावृत्तम् । शब्दालंकारस्तु चित्र एव । किं चात्राष्टकोणस्थितवर्णैः 'श्रीहयग्रीवेश पाहि' इति प्रतीयते । उत्तरत्रापीति। नागबन्धभेदेष्वित्यर्थः ॥ मुरस्येति। हे तनो देहासिमा-

पदश्रीनिर्धूतद्रुमनवपलाशान्तररमां
महीजातां तां भो धुतनिललधाम व्रज भज ॥ २ ॥

एवं द्वित्रिचतुर्नागबन्धेषु यथासंभवं भेदा ऊहनीयाः ।

ओजयुक्तेष्वाद्यषष्ठतृतीयान्त्यैकता भवेत् ।
दलैर्द्वादशभिर्युक्तः पद्मबन्धस्त्वनुष्टुभि ॥

यथा—

दाराणां सुखदातारं दैत्यदामहरं मुदा ।
दावाग्निमरिदावस्य भजे दामोदरं सदा ॥ ३ ॥

द्वादशदलपद्मभेदो यथा—

कमलाचित्तनालीक कलीनाहतकंटक[1] ।
कटकं देहि भालांक[2] कलां भाव्यललामकम् ॥ ४ ॥

---

निन् जीव,मुरस्य दैत्यस्यारातेः शत्रोः। विष्णोरित्यर्थः । उत् उत्कृष्टं चरण एव शरजं जलजं तस्मिन्नमन्दं जागरूकं मधुपं भ्रमरमिति रूपकम्। लक्ष्मीः कान्तिः वृणोति यामिति लक्ष्मीवर्याम् । अधिककान्तिमतीमित्यर्थः । श्रेष्ठलक्ष्मीमिति विशेषणोत्तरपदबहुव्रीहिर्वा । रचितस्य गुरुणो महतः पामस्य(न्नः) पापस्य प्रशमितां शमनम् । भावे क्तः । यया ताम् । 'पामा विचर्चिकायां स्त्री न द्वयोः पापपङ्कयोः' इत्यनेकार्थः । पदश्रिया पादकान्त्या निर्धूता तिरस्कृता द्रुमस्याशोकस्य नवस्य नूतनस्य पलाशस्य पत्रस्यान्तररमा मध्यलक्ष्मीर्यस्यास्ताम्। 'द्रुमो नाशोकवृक्षयोः' इत्यनेकार्थः ।महीजातां भूमिजातां तां सीतां भज । 'भज सेवायाम्' लोट्। धुतो निरस्तो निललो नितरां लल्यते ईप्स्यते इति निललः संसारो यस्मिंस्तथाविधं धाम स्थानम् । मुक्तिमित्यर्थः । व्रज । अत्र 'लक्ष्मीपते पाहि' इति प्रतीयते अष्टकोणस्थितवर्णैः ॥ **ओजेति** । ओजौ प्रथमतृतीयौ च युक्तौ च द्वितीयचतुर्थौ च तेषु । तथा च प्रथमतृतीयपादयोराद्यषष्ठवर्णौ । द्वितीयचतुर्थपादयोस्तृतीयान्त्यवर्णौ यौ तेषामेकरूपत्वमिति भावः। उदाहरणे दा इत्यक्षरं तथाविधं बोध्यम् ॥ **दाराणामिति** । पत्नीनामित्यर्थः ।दैत्यानां दाम मालां हरतीति तथोक्तम् ॥ **कमलेति** । कमलाया लक्ष्म्याश्चित्तमेव नालीकं पद्मम्। 'नालीकं त्वब्जे क्लीबं शरे पुमान्' इति रत्नमाला । तस्मिन् भ्रमरेति संबोधनम्। 'कलीनं तु खलीनेलौ' इत्यनेकार्थः । आसमन्ताद्धतः कण्टको येन तस्य संबुद्धौ तथोक्तम् । 'रोमाञ्चे क्षुद्रशत्रौ च द्रुमाङ्गे कण्टकोऽस्त्रियाम्' इति त्रिकाण्डशेषः । भालाङ्कः । 'भालाङ्कः करपत्रे स्याच्छाकभेदे च रोहिते । महालक्षणसंपन्नपुरुषे

---

१–२. परसवर्णस्य नित्यत्वे बन्धानुगुण्येनानुस्वार एव रक्षितः.

षोडशदलपद्मबन्धो यथा—

कृतस्वान्तततध्वान्तधूत भूतहितव्रत ।
दान्तशान्तजितप्रेत श्रौतगीतस्तुतस्तुत ॥ ५ ॥

अष्टदलपद्मबन्धो यथा—

माता तस्या धरण्याश्चरणभजकवस्वीशयक्षोरधामा
माधारक्षो यशस्वी भवतु मम मुदे भ्राजितस्फारनामा ।
मानारस्फातजिभ्राजितरिपुनिवहध्वंसनव्याससामा
मासासव्या न स ध्वंसितदितिजवरेण्यारधस्याततामा ॥ ६ ॥

एतेषु यथासंभवं लक्षणमूह्यम् । एवमग्रेऽपि ।

---

कच्छपे हरौ॥' इति मेदिनीकोशान्महालक्षणसंपन्नेत्यर्थः। भया कान्त्या आढ्यं युक्तं ललामं भूषणं यस्य तथोक्तम् । 'ललामं पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुषु' इत्यमरः । कलां विद्यारूपं कटकं भूषणमिति व्यस्तरूपकम् । देहि । इयं विष्णुं प्रति भक्तस्योक्तिः ॥ कृतेति । कृतं स्वान्ते भक्तहृदये ततस्य व्याप्तस्य ध्वान्तस्याज्ञानस्य धूतं निरसनम् । भावे क्तः । येन तस्य संबुद्धौ तथोक्तम् । भूतानां प्राणिनां हिते हितकरणे व्रतं दीक्षा यस्य तथोक्तम् । जितः प्रेतः शत्रुर्येन सः । 'प्रेतः शत्रौ शवेऽपि च' इत्यनेकार्थः । श्रुतीनां समूहः श्रौतं तस्य गीतं यस्य सः । उच्चारणार्थकाद्गाधातोर्भावे क्तः । तथा च दान्तश्चासौ शान्तश्चासौ जितप्रेतश्चासौ श्रौतगीतश्चासौ स्तुतश्च । ब्रह्मेत्यर्थः। तेन स्तुतेत्यपि संबोधनम् । देहीति पूर्वेणान्वयः ॥ मातेति । माता तस्याः धरण्याः चरणभजकवस्वीशयक्षोरधामा माधारक्षः यशस्वी भवतु मम मुदे भ्राजितस्फारनामा मानारस्फातजिभ्राजितरिपुनिवहध्वंसनव्याससामा मा आस असव्या न सः ध्वंसितदितिजवरेण्यारधस्य अततामा इति पदच्छेदः। स इति तच्छब्दप्रयोगाद्यस्येत्यध्याहर्तव्यम् । ध्वंसिता दितिजवरेण्या दैत्यश्रेष्ठा नरकाद्या येन तस्य तथोक्तम् । यस्य कृष्णस्येत्यर्थः । अततोऽसंगत आमो रुक् यस्याः सा तथोक्ता । 'ततं व्याप्ते विस्तृते संगते त्रिषु । वीणादिवाद्ये क्लीबे स्याद्वायौ पुंसि' इत्यनेकार्थः । 'आमो रुक्तद्भिदोः पुंसि स्यादपक्केऽन्यलिङ्गकः' इति मेदिनी । मा लक्ष्मीः । असव्या वामभागास्थिता । 'वामं शरीरं सव्यं स्यात्' इत्यमरः। नास नाभवत् । तथा च भार्या अभवदिति भावः । स तादृशः कृष्णो मम मुदे भवत्वित्यन्वयः। अन्यत्सर्वमस्य विशेषणम् । तस्या धरण्या भूमेर्माता मानकर्ता वसवश्च ईशश्चासौ यक्षश्चेशयक्षः। यक्षराज इत्यर्थः। उः शिवः। रोऽग्निः । एतेषां द्वन्द्वः । तथा च चरणभजकानां स्वपादसेवकानां वस्वीशयक्षोराणां वसुकुबेरशिववह्नीनां धाम तेजो येन स तथोक्तः। मायाः लक्ष्म्या आधारः क्षः वक्षःस्थलं यस्य स तथोक्तः । यशस्वी कीर्तिमान् । भ्राजितानि स्फाराणि बहूनि नामानि यस्य स तथो-

गजबन्धो यथा—

राजाभास्या भासमानस्वर्णकर्णखपिस्वरा ।
सारापाला पातु लोला सा पिकस्वनमासरा ॥ ७ ॥

चक्रबन्धो यथा—

श्रीराजीवविराजमाननयनं श्यामाम्बुदाभं हरिं
श्रीमद्वीन्द्र(?)महेन्द्रवन्दितपदं पापादपेतं भजे ।
अञ्चन्तं गजराजवज्जनकजातालस्तनालिङ्गितं
सान्द्रप्रेमभरं स्वभक्तनिवहे गेयस्ववीर्यं बुधैः ॥ ८ ॥

छत्रबन्धो यथा—

सालजालवलद्वाते भूरिभूते दृगादृते ।
सा रराज रमा चारुरुचा मारजरारसा ॥ ९ ॥

---

क्तः । मया संपदा नारेण नरसमूहेन च स्फातानाममित्रृद्धानां जिनां जयवतामत एव भ्राजितां प्रकाशमानानां रिपूणां निवहस्य वृन्दस्य ध्वंसनव्यासे नाशविस्तारे साम उपायो यस्य स तथोक्तः । 'व्यासो मुनौ च विस्तारे' इति त्रिकाण्डशेषः। क्षादीनां वक्षःस्थलादिवाचकत्वमेकाक्षरकोशे द्रष्टव्यम् ॥ **राजास्येति** । राजाभास्या भासमान स्वर्णकर्णखपिस्वरा सारापाला पातु लोला सा पिकस्वनमासरा इति पदच्छेदः । सेति तच्छब्दबलाद्येति लभ्यते । वा राजाभास्या चन्द्राभमुखी । 'राजा चन्द्रो नृपो राजा' इति मञ्जरी । खं पातीति खपम् । द्रव्यसाध्यमित्यर्थः । मुक्ताफलमिति यावत् । खपमस्यास्तीति खपि । भूषणमिति यावत् । कर्णयोः खपि । कर्णसंबन्धि भूषणमित्यर्थः । स्वरः गानं भाषणं वा । कर्णखपि च स्वरश्च कर्णखपिस्वरौ । स्वर्णमस्यास्तीति स्वर्णम् । अन्यत्र सुष्ठु अर्णाः वर्णानि यस्मिन् स स्वर्णः । स्वर्णं च स्वर्णश्च स्वर्णौ (?) स्वर्णौ च तौ कर्णखपिस्वरौ च स्वर्णकर्णखपिस्वरौ भासमानौ स्वर्णकर्णखपिस्वरौ सुवर्णमयकर्णभूषणशोभनाक्षरयुक्तभाषणे यस्याः सेति तथोक्तम् । 'स्वरो गाने भाषणे नासिकानिले । उदात्तादौ च षड्जादावकारादौ ध्वनौ पुमान् ॥' इत्यनेकार्थः । अराणामिदमारं चक्रं तेन आसमन्तात्पालयतीत्यारापालो विष्णुः । तेन सहिता सारापाला । स्वनस्य मा संपत् तस्याः सरः । माला । पिकस्य स्वनमासर इव स्वनमासरो यस्याः सा तथोक्ता । लोला अस्थिरा लक्ष्मीः पातु रक्षतु । 'पा रक्षणे' इत्यस्माल्लोट् ॥

---

१. अस्माभिरियानेव टीकाग्रन्थ उपलब्धः.

चामरबन्धो यथा—

मारसारतरस्फारस्फातिभारं परं सुरम् ।
सीतानेत्रचकोरेन्दुबिम्बं वन्दे रमेश्वरम् ॥ १० ॥

मर्दलबन्धो यथा—

मारसापरसापारामापारापरसापसा ।
मवरापवरामायामामायापवरावरा ॥ ११ ॥

रथबन्धो यथा—

पादाहितगुणा मान्ति यस्य चित्ते कलावतः ।
महिलानन्ददं कान्तं तं भजे सततं हरिम् ॥ १२ ॥

गोमूत्रिकाबन्धो यथा—

भजे राधावरं कञ्जमुखं भक्तरुचिव्रतम् ।
व्रजे बाधाहरं कुञ्जसुखं व्यक्तशुचिस्मितम् ॥ १३ ॥

नाडीरामोऽब्धिभूर्नेत्रदग्भूवर्णोऽग्निकन्यका ।
भूरसोऽङ्घ्रिगजो वार्धिवाजी सायककन्यका ॥
कर्मस्वरः सिद्धिगजो नदीशत्रुर्गजाम्बुधिः ।
तर्करामः पापचन्द्रो नदीनेत्रं शरानलः ॥
कारकेन्दुर्दन्तिनेत्रं मुनिवार्धी रमारसः ।
मुनिलक्ष्मीः पाण्डवार्वा प्रश्नकाव्यं युगे रसः ॥
मूर्तिगन्धश्चन्द्रमुनिर्नेत्रबाणो युगाम्बुधिः ।
मूर्तिर्नेत्रं चन्द्रचन्द्रो नेत्रमूर्तिः क्षमाशरः ॥
बाहुद्वीपो वार्धिलक्ष्मीः कालतर्कोऽङ्घ्रिसागरः ।
भूमिनेत्रं कालचन्द्रो वार्धिकालो बलाम्बुधिः ॥
कन्याकुचो द्वीपचन्द्रो गजशक्तिर्नदीशरः ।
लक्ष्मीमुनिस्तर्कलक्ष्मीः कन्यातर्को नदीमुनिः ॥
कन्यालक्ष्मीर्बलबलं गजकन्या नदीगुणः ।
लक्ष्मीचन्द्रस्तर्कनेत्रं कन्यावार्धिर्युगद्वयम् ॥

करचन्द्रो भूमिशक्तिः शक्तिवार्धिर्हनूरसः ।
भूमिदन्ती शक्तिमुनिर्मकरालयकन्यका ॥
अत्र वीथीबोधिकाद्या संख्यान्या गृहबोधिका ।
संख्यापर्यायकथनं शेषबिन्दौ भविष्यति ॥
घोटीगतिक्रमादेवं चतुरङ्गगृहेषु च ।
निरन्तरं लघुगुरूण्यक्षराणि न्यसेद्यथा—॥

पपापपापपापपापपापपापपापपा
पपापपापपापपापपापपापपापपा ।
पपापपापपापपापपापपापपापपा
पपापपापपापपापपापपापपापपा ॥ १४ ॥

पञ्चचामरप्रमाणिकासमानिकोपचामरवृत्तैः पञ्च श्लोका भवन्ति । दण्ड-पार्श्ववर्तुलकोणघोटीगत्याद्याकारभेदेनानेके भेदा ऊह्याः । एवं मयूरक्षीर-हारबन्धादयोऽपि ॥

जलजनिजनिजायाप्रेमपाकेन गोपीजनमनसिजकेलीलम्पटे लम्पटेन ।
गुहपुरनिलयेन प्रोद्धृतो बन्धबिन्दुः सुरकुसुममरन्दे चारुचम्पूप्रबन्धे ॥

इति श्रीमद्घटिकाशतशतघण्टाविहिताष्टभाषासरसकविताचरणनिपुणस्य वासुदेवयोगीश्वरस्यान्तेवास्यन्यतमस्य गुहपुरवासशर्मणः कृष्णशर्मणश्चन्द्रदेवशर्मणश्च कृतौ मन्दारमरन्दे चम्पूप्रबन्धे बन्धबिन्दुः पञ्चमः समाप्तिमगमत् ।

---

गुप्तबिन्दुः ।

अधुना गुप्तबिन्दौ तु क्रियादेर्गोप्यगुम्फनम् ।
निरूप्यते समासेन विबुधानन्दवृद्धये ॥
भङ्गश्लेषाद्युपायेन क्रियादेर्गोपनं भवेत् ।
अथवा चरणान्तादिष्वक्षराणां निवेशनात् ॥

तत्र क्रियागुप्तं यथा—

गृहद्वारगतस्यास्य पुंसः कामार्तचेतसः ।
विलासैर्गणिकां सख्यो वित्ताकर्षणनिर्भराम् ॥ १ ॥

अत्र 'वित्त' इति ।

आलोलनयनां कृष्णो लिंपन्तीं वीक्षणैर्दिशः।
गच्छन्तीं सद्मसंकेतं तिमिरे राधिकां मुदा ॥ २ ॥

अत्र 'आलिंगति' इति।

हेरम्बचरणाम्भोजं मद्भृङ्गनिषेवितम्।
दावाग्निं विघ्नदावस्य वंदारूणां वयं सदा ॥ ३ ॥

अत्र 'वंदामहे' इति।

जितकाञ्चनकुम्भश्रि सुघृणायतनं द्युतेः।
तादृक्षमस्या वक्षोजद्वन्द्वं सोऽतिमुदा हरिः ॥ ४ ॥

अत्र 'जिघृक्षति' इति।

रमासमानया कृष्णः सहासो राधया तया।
निकुञ्जनिकुरम्बेषु कालिन्दीविलसत्तटे ॥ ५ ॥

अत्र 'विजहार' इति।

अञ्चितोऽपि निकुञ्जोऽसौ कुञ्चत्कण्टकिवीरुधा।
स्वैरिण्याश्चिररात्राय लुठन्त्याः कामिनः कृते ॥ ६ ॥

अत्र 'सौधायते' इति।

वसन्तं प्राणिनां देहे वसतस्ते सुरोत्तम।
पादे स्पृश्ये त्रयीवाचा वयं भक्तिं सदा तया ॥ ७ ॥

अत्र 'याचामहे' इति।

इति क्रियागोपनम्।

कर्तृगुप्तं यथा—

सर्पात्क्रूरतरान्दैत्याननेकानवधीद्युधि।
कमलापतिविद्वेषपरिदूषितमानसान् ॥ ८ ॥

अत्र 'सर्पात्' इति।

दृप्तानामात्मनारीणां सर्वसाम्राज्यसंभवः।
तादृशो दर्पभारोऽयं व्यभञ्जीत्यवदन्मुदा ॥ ९ ॥

अत्र 'आत्मना' इति।

अन्ये भेदाः पूर्ववत्।

इति कर्तृगोपनम्।

१. परसवर्णमकृत्वैव गुप्तताश्रिता.

कर्मगुप्तं यथा—

[1]शंकरः कुरुताच्छ्रीमान्भक्तस्य मम ते सदा ।
निजाश्रितकदम्बस्य निलिम्पविटपोपमः ॥ १० ॥

अत्र 'शम्' इति ।

[2]मनोजस्य परीहासैराराम राधया तया ।
अहारि गोपकान्तानां रासक्रीडामहोत्सवे ॥ ११ ॥

अत्र 'मनः' इति ।

अन्ये भेदाः पूर्ववत् ।

इति कर्मगोपनम् ।

संबन्धगुप्तं यथा—

[3]बालेवयस्य मुग्धुक्ता मुखमालोकसे सदा ।
तमद्य कामसंतप्तं गाढालिङ्गनसंभ्रमैः ॥ १२ ॥

अत्र 'यस्य' इति ।

पूर्ववदन्ये भेदाः ।

पदगुप्तं यथा—

[4]नालंकृतकुलं क्रूरं विहरन्तं सरस्तटे ।
दुद्राव दूरतो दृष्ट्वा चक्री भीतियुतो जवात् ॥ १३ ॥

अत्र 'नकुलम्' इति ।

[5]यामध्यमं च सुकृतं लेभे त्वत्तः पुरा नृपः ।
अद्य धत्ते स्मरार्ता सा न[6]वं कवचमाकुलम् ॥ १४ ॥

अत्र 'सुतं, कचम्' इति च ।

'इदमेवार्थगुप्तम्' इति केचित् ।

---

१. 'ते करः' इति योजना. २. अजस्य कृष्णस्य. ३. 'हे वाले, यस्य मुखमालोकसे तं कामसंतप्तं गाढालिङ्गनविभ्रमैरव' इति योजना. ४. 'नकारेणालंकृतः कुलशब्दो यत्र तं नकुलम्' इति वोध्यम्. ५. मध्यमेन 'कृ' इत्यनेन रहितमध्यमम्. ६. नास्ति वकारो यत्र अर्थात् वकाररहितम्.

पदार्थोभयगुप्तं यथा—

सनिषिद्धोऽप्यगराजः कुचोपमायां पुनश्च गतिवाण्योः (?) ।
योग्योऽभूदुपमायां सर्वं धात्रोपयुक्तमिह सृष्टम् ॥ १५ ॥

अत्र सनिषिद्धो निषेधवाचकनकारयुक्त इत्यर्थगोपनम्, 'नागराजः' इति पदगोपनं च । अत्र क्रियागुप्तवद्भेदा बोध्याः ।

कर्तृकर्मोभयगुप्तं यथा—

नारीनाशोदयद्धूलीपालीपिहितपूषणि ।
खान्तरे खण्डयामास खड्गेनैकेन खण्डशः ॥ १६ ॥

अत्र 'ना, अरीन्' इति ।

भावगुप्तं यथा—

मारनाराचनिर्भिन्नमानसा मत्तकाशिनी ।
मन्दरं मृगशावाक्षी मुहुर्निन्दति लुण्ठति ॥ १७ ॥

अत्र 'चन्द्रोत्पत्तिहेतुत्वात्' इति भावः ।

जलजनिजनिजायाप्रेमपाकेन गोपीजनमनसिजकेलीलम्पटे लम्पटेन ।
गुहपुरनिलयेन प्रोद्धृतो गुप्तबिन्दुः सुरकुसुममरन्दे चारुचम्पूप्रबन्धे ॥

इति श्रीमद्भटिकाशतशतघण्टाविहिताष्टभाषासरसकविताचरणनिपुणस्य वासुदेवयोगीश्वरस्यान्तेवास्यन्यतमस्य गुहपुरवासशर्मणः कृष्णशर्मणश्चन्द्रदेवनाम्नश्च कवेः कृतौ मन्दारमरन्दे चम्पूप्रबन्धे गुप्तबिन्दुः षष्ठः समाप्तिमगमत् ।

पूर्वार्धः समाप्तः ।

---

नर्तनबिन्दुः ।

अत्र नर्तनबिन्दौ तु वक्ष्ये रूपकलक्षणम् ।
प्राचीनोक्तीः समालोच्य बालानां बुद्धये द्रुतम् ॥
अभिव्यज्य विभावानुभावादीन्नाटके च ये (?) ।
उत्पादयन्सहृदये रसज्ञानं निरन्तरम् ।
अनुकर्तृस्थितो योऽर्थोऽभिनयः सोऽभिधीयते ॥

---

१. कुचोपमायां निषिद्धोऽपि सोऽगराजः पर्वतः पुनश्च गतिवर्णनायां नकारयुक्तो- राजो नागराजो गजो योग्योऽभूत्.

आङ्गिको वाचिकश्चापि सात्त्विकाहार्यकाविति ।
स चतुर्धाकृतस्तज्ज्ञैराङ्गिकोऽङ्गक्रियोच्यते ॥
रागानुषङ्गि यद्वाक्यं नाट्ये वाचिक उच्यते ।
सत्त्वक्रिया सात्त्विकः स्यादाहार्यो भूषणादिकः ॥
चतुर्विधैरभिनयैः सात्त्विकाङ्गिकपूर्वकैः ।
धीरोदात्ताद्यवस्थानुकृतिनाट्यं रसाश्रयम् ॥
तादृङ्नाट्यं द्विधा प्रोक्तं नृत्यनृत्यविभेदतः ।
भावाश्रयं तु नृत्तं स्यान्नृत्यं താललयाश्रयम् ॥
तद्द्वयं द्विविधं प्रोक्तं लास्यताण्डवभेदतः ।
लास्यं तु मधुरं प्रोक्तमुद्धतं ताण्डवं मतम् ॥
नाट्यस्यैवात्र मुख्यत्वादादौ तल्लक्ष्म कीर्तितम् ।
तादृङ्नाट्याद्रूपकाणि दशधा संभवन्ति हि ॥
नाटकं च प्रकरणं भाणः प्रहसनं डिमः ।
व्यायोगसमवाकारौ वीथ्यङ्केहामृगा इति ॥
यथामुखादौ पद्मादेरारोपो रूपकं मतम् ।
तथैव नायकारोपो नटे रूपकमुच्यते ॥
रसेतिवृत्तनेतारस्तत्तद्रूपकभेदकाः ।
रम्यबिन्दौ रसानां च लक्षणं वक्ष्यते स्फुटम् ॥
शुद्धबिन्दौ नायकानां वक्ष्यते लक्ष्म विस्तरात्
इतिवृत्तकथावस्तुशब्दाः पर्यायवाचकाः ॥
इतिवृत्तं प्रधानं तु शरीरं परिकीर्तितम् ।
तच्चाधिकारिकं चैव प्रासङ्गिकमिति द्विधा ॥
अधिकारः फलेशत्वमधिकारी तु तद्युतः ।
तन्निर्वृत्तं भवेदाद्यमन्तव्याप्याधिकारिकम् ॥
प्रसङ्गात्तु प्रवृत्तं तु बुधाः प्रासङ्गिकं विदुः ।
प्रासङ्गिकं तु द्विविधं पताका प्रकरीति च ॥

दूरानुवर्तिनी या च पताका सा कथा मता ।
सा प्रोक्ता प्रकरी प्राज्ञैः कथा याल्पानुवर्तिनी ॥
ख्यातं कल्प्यं च संकीर्णमिति तन्निविधं त्रिधा ।
प्रख्यातमितिहासादि कल्प्यं स्यात्कविकल्पितम् ।
संकीर्णं संकरायत्तमेवं तन्नवधा स्मृतम् ॥
इतिवृत्तं पुनर्द्वेधा सूच्यासूच्यविभेदतः ।
सूच्यं तु द्विविधं प्रोक्तं श्राव्याश्राव्यविभेदतः ॥
असूच्यमपि चाश्राव्यदृश्यश्राव्यविभेदतः ।
त्रिविधं तत्र चाश्राव्यं स्वगतं परिकीर्तितम् ॥
दृश्यं तु मधुरोपात्तरसभावनिरन्तरम् ।
श्राव्यं तु त्रिविधं सर्वनियताकाशभेदतः ॥
सर्वश्राव्यं प्रकाशं स्यान्नियतश्राव्यमप्युत ।
जनान्तिकं तथैवापचारितं चेति तद्द्विधा ॥
पताकात्रिपताकाभ्यां रञ्जितेन करेण च ।
कथान्तरेऽपवार्यान्यानन्योन्यं यत्तु मन्त्रणम् ॥
जनान्ते तच्च कविभिर्जनान्तिकमितीरितम् ।
सर्वानन्यांश्चापवार्य रहस्यं यत्तु कथ्यते ॥
तच्चापवारितमिति प्राज्ञाः पूर्वे बभाषिरे ।
अविष्टपात्रं किं ब्रूथ किं ब्रवीष्येवमादिकम् ॥
उक्त्वा श्रुत्वेव चानुक्तमप्येवं स्यादितीव यत् ।
भाषणं तत्तु चाकाशभाषितं ब्रुवते बुधाः ॥
तर्जनीमूलसंलग्नकुञ्चिताङ्गुष्ठकः करः ।
गण्डगः संहताकारप्रसारिततलाङ्गुलिः ॥
पताकः स्यादथ यदि वक्रितानामिकाङ्गुलिः ।
स एव श्रोत्रगस्तर्हि त्रिपताक इतीर्यते ॥
पुनश्च वस्तु विद्वद्भिः पञ्चधा परिकीर्तितम् ।
बीजं बिन्दुः पताका च प्रकरी कार्यमित्यपि ॥

अर्थप्रकृतयः पूर्वैः पञ्चेमे परिकीर्तिताः ।
यत्तु स्वल्पमुपन्यस्तं वहुधा विस्तृतिं गतम् ॥
कार्यस्य कारणं प्राज्ञैस्तद्बीजमिति कथ्यते ।
बीजप्रधाने बीजस्य प्रसङ्गोक्तिः फलान्तरैः ॥
विच्छिन्ने यदविच्छेदे कारणं बिन्दुरिष्यते ।
पताका तु प्रधानोपकाराद्या स्वार्थकारिणी ॥
प्रकरी स्यात्पदार्थस्य साधकं तु प्रदेशभाक् ।
वस्तुनस्तु समर्थस्य धर्मकामार्थलक्षणम् ॥
फलं कार्यमिदं शुद्धं मिश्रं वा कल्पयेत्सुधीः ।
अवस्थाः पञ्च कार्यस्य प्रारब्धस्य फलार्थिभिः ॥
आरम्भयत्नप्राप्त्याशानियताप्तिफलागमाः ।
अत्र मुख्यफलोद्योगमात्रमारम्भ इष्यते ॥
यत्नस्तु तत्फलप्राप्तावत्यौत्सुक्येन वर्णनम् ।
प्राप्त्याशा तु महार्थस्यानिर्धारभावना तथा ॥
नियताप्तिरविघ्नेन फलसंसिद्धिनिश्चयः ।
समग्रेष्टफलप्राप्तिर्नायकस्य फलागमः ॥
एकैकस्यास्त्ववस्थायाः प्रकृत्या चैकयैकया ।
योगः संधिरिति ज्ञेयो नाट्यविद्याविशारदैः ॥
मुख्यप्रयोजनवशात्तथाङ्गानां समन्वये ।
अवान्तरार्थसंवन्धः संधिः संधानरूपतः ॥
मुखं प्रतिमुखं गर्भो विमर्शश्चोपसंहृतिः ।
इति पञ्चविधः प्रोक्तः संधिः पूर्वैर्मनीषिभिः ॥
नानाविधानामर्थानां भावानामपि कारणम् ।
तन्मुखं तत्र चाङ्गानि बीजारम्भानुरोधतः ॥
उपक्षेपः परिकरः परिन्यासो विलोभनम् ।
युक्तिः प्राप्तिः समाधानं विधानं परिभावना ॥

उद्भेदभेदौ करणमिति द्वादश योजयेत् ।
उपक्षेपस्तु बीजस्य सूचना कथ्यते बुधैः ॥
परिक्रिया तु बीजस्य बहुलीकरणं मतम् ।
बीजनिष्पत्तिकथनं परिन्यास इतीर्यते ॥
नायकादिगुणानां यद्वर्णनं तद्विलोभनम् ।
सम्यक्प्रयोजनानां हि विचारो युक्तिरिष्यते ॥
या स्यात्सुखेन संप्राप्तिः प्राप्तिरित्यभिधीयते ।
बीजस्य पुनराधानं समाधानमितीर्यते ॥
किंचिद्दुःखकरं किंचिद्विधानं सुखकारकम् ।
श्लाघ्यैश्चित्तचमत्कारो गुणाद्यैः परिभावना ॥
उद्घाटनं यद्बीजस्य तदुद्भेदः प्रकीर्तितः ।
बीजस्योत्तेजनं भेदो यद्वा संघातभेदनम् ॥
प्रस्तुतार्थसमारम्भं करणं परिचक्षते ।
लक्ष्यालक्ष्य इवोद्भेदो बीजस्य यदि वै भवेत् ॥
तत्स्यात्प्रतिमुखं बिन्दोः प्रयत्नस्यानुरोधतः ।
इह त्रयोदशाङ्गानि प्रयोज्यानि मनीषिभिः ॥
विलासः परिसर्पश्च विधूतं शर्मनर्मणी ।
नर्मद्युतिः प्रगमनं विरोधः पर्युपासनम् ॥
वज्रं पुष्पमुपन्यासो वर्णसंहार इत्यपि ।
विलासः संगमार्थस्तु व्यापारः परिकीर्तितः ॥
पूर्वदृष्टस्य बीजस्य त्वङ्कच्छेदादिना तथा ।
नष्टस्यानुस्मृतिः शश्वत्परिसर्प इतीरितः ॥
नायकादेरीप्सितानामर्थानामनवाप्तितः ।
अरतिर्या भवेत्सा तु विद्वद्भिर्विधुतं मतम् ॥
अरतेः शमनं तज्ज्ञाः शममाहुर्मनीषिणः ।
परिहासप्रधानं यद्वचनं नर्म तद्विदुः ॥

कोपस्यापह्नवार्थं यद्धास्यं नर्मद्युतिर्मतम् ।
तथानुरागबीजस्य चोत्तरोत्तरभाषणैः ॥
प्रकाशनं प्रगमनमिति नाट्यविदो विदुः ।
विरोधश्छद्मना यच्च हितागमनिरोधनम् ॥
पर्युपासनमित्युक्तं स्वजनानुनयो बुधैः ।
वज्रं तदिति विज्ञेयं साक्षान्निष्ठुरभाषणम् ॥
रागप्रकाशको वाक्यविशेषः पुष्पमुच्यते ।
युक्तिभिः सहितो योऽर्थो ह्युपन्यासः स उच्यते ॥
सर्ववर्णापगमनं वर्णसंहार इष्यते ।
परिसर्पप्रगमनवज्रोपन्यासपुष्पकम् ॥
पञ्चाङ्गान्येव मुख्यानीत्यार्याः प्रतिमुखे विदुः ।
दृष्टादृष्टस्य बीजस्य गर्भस्त्वन्वेषणं मुहुः ॥
अत्राप्त्याशा पताकानुगुण्येनाङ्गानि कल्पयेत् ।
अभूताहरणं मार्गो रूपोदाहरणे क्रमः ॥
संग्रहश्चानुमानं च तोटकाधिबले तथा ।
उद्वेगः संभ्रमाक्षेपावित्यङ्गानि च द्वादश ॥
अभूताहरणं तत्स्याद्वाक्यं यत्कपटाश्रयम् ।
मार्गस्तत्त्वार्थकथनं रूपं संदेहवद्वचः ॥
सोत्कर्षवचनं यत्तु तदुदाहरणं मतम् ।
भावज्ञानं क्रमो यद्वा चिन्त्यमानार्थसंग्रहः ॥
संग्रहः सामदानोक्तिः प्रस्तुता परिकीर्तिता ।
अर्थस्याभ्यूहनं लिङ्गादनुमानं प्रचक्षते ॥
ससंभ्रमं तु वचनं संगिरन्ते हि तोटकम् ।
बुधैरधिबलं प्रोक्तं कपटेनाभिवञ्चनम् ॥
यद्वेष्टजनसंधानं बुधा अधिबलं विदुः ॥
तोटकस्यान्यथाभावं केचिच्चाधिबलं विदुः ॥

तत्र चोरादिसंभूतं भयमुद्वेग उच्यते।
शत्रुव्याघ्रादिसंभूतौ शङ्कात्रासौ हि संभ्रमः॥
गर्भबीजसमुत्क्षेपमाक्षेपं परिचक्षते।
इष्टार्थोपायानुसृतिमाक्षेपं केचिदूचिरे॥
अत्राभूताहृतिर्मार्गस्तोटकाधिबले तथा।
आक्षेपश्चेति पञ्चैव प्रधानानि विदो विदुः॥
यत्र प्रलोभनक्रोधव्यवसायैर्विमृश्यते।
बीजार्थो गर्भसंभिन्नः स विमर्श इतीरितः॥
प्रकरी नियताप्त्यानुगुण्यादत्राङ्गकल्पनम्।
अपवादश्च संफेटो विद्रवद्रवशक्तयः॥
द्युतिप्रसङ्गौ छलनं व्यवसायो विरोधनम्।
प्ररोचनं च चलनमादानं च त्रयोदश॥
तत्रापवादो दोषाणां प्रख्यापनमितीर्यते।
रोषसंग्रथितं वाक्यं संफेटं परिचक्षते॥
विरोधवधदाहादिर्विद्रवः परिकीर्तितः।
गुरोस्तिरस्कृतिं प्राह द्रवं तु भरतो मुनिः॥
उत्पन्नस्य विरोधस्य शमनं शक्तिरिष्यते।
द्युतिर्नाम समुद्दिष्टा तर्जनोद्वेजने बुधैः॥
प्रस्तुतार्थेन च गुरोः प्रसङ्गः परिकीर्तनम्।
अवमानादिकरणं कार्यार्थं छलनं विदुः॥
व्यवसायः स्वसामर्थ्यप्रख्यापनमितीर्यते।
विरोधनं विरोधोक्तिः संरब्धानां परस्परम्।
सिद्धवद्भाविनोऽर्थस्य सूचना स्यात्प्ररोचनम्।
आत्मश्लाघा तु चलनमादानं कार्यसंग्रहः॥
मुख्यसंध्यादयो यत्र विकीर्णा बीजसंयुताः।
महाप्रयोजनं चापि तन्निर्वहणमुच्यते॥

एतदेव बुधैः प्रोक्तमुपसंहृतिरित्यपि ।
फलागमनकार्यानुगुण्येनाङ्गानि कल्पयेत् ॥
संधिर्विरोधो ग्रथनं निर्णयः परिभाषणम् ।
प्रसादानन्दसमयाः कृतिर्भाषोपगूहनम् ॥
पूर्वभावोपसंहारौ प्रशस्तिश्च चतुर्दश ।
स्याद्बीजोपगमः संधिर्विरोधः कार्यमार्गणम् ॥
कार्यस्योपक्षेपणं तु ग्रथनं परिकीर्तितम् ।
पश्चाच्च स्वानुभूतार्थकथनं निर्णयो मतः ॥
विवादविधिरन्योन्यं परिभाषणमीरितम् ।
स्याच्छुश्रूषादिसंभूता प्रसादस्तु प्रसन्नता ॥
अभीप्सितार्थसंप्राप्तिरानन्दः परिकीर्तितः ।
समयः स्यात्सुखावाप्तिर्दुःखप्रशमनं च वा ॥
कृतिरित्युच्यते पूर्वैर्लब्धार्थस्य स्थिरीकृतिः ।
प्राप्तकार्यानुमोदः स्याद्बुधैर्भाषणमीरितम् ॥
अद्भुतार्थस्य संप्राप्तिरुपगूहनमुच्यते ।
दर्शनं त्विष्टकार्यस्य पूर्वभाव इतीरितः ॥
उपसंहार इत्युक्तः कार्यार्थस्योपसंहृतिः ।
शुभप्रशंसनं धीरैः प्रशस्तिरिति कथ्यते ॥
चतुःषष्ट्यङ्गसंयुक्ताः स्युरेवं पञ्च संधयः ।
उक्तिर्विवक्षितार्थस्य गोप्यार्थस्य च गोपनम् ॥
प्रकाश्यार्थप्रकाशश्च रागाभिनयसंपदः ।
चमत्कारवहत्वं च कथाया विस्तरस्तथा ॥
इत्येषां पञ्चसंधीनां षड्विधं स्यात्प्रयोजनम् ।
वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ॥
संक्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः ।
शुद्धः संकीर्णकश्चेति विष्कम्भो द्विविधो मतः ॥

एकद्विमध्यपात्रोक्तः शुद्धः स्यात्संस्कृतात्मकः ।
नीचमध्यमपात्रोक्तो मिश्रः स्यादुभयात्मकः ॥
अन्तर्जवनिकासंस्थैश्चूलिकार्थस्य सूचना ।
अङ्कान्तपात्रैरङ्कास्यमुत्तराङ्कार्थसूचनम् ॥
वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ।
प्रवेशकस्तु नाट्यङ्के नीचपात्रप्रयोजितः ॥
यत्र स्यादुत्तराङ्कार्थः पूर्वाङ्कार्थानुसंगतः ।
असूचिताङ्कपत्रं तदङ्कावतरणं मतम् ॥
प्रत्यक्षनेतृचरितो विन्दुव्यक्तिपुरस्कृतः ।
नायकैकाहचरितप्रतिपादनसंयुतः ॥
अङ्को नानाप्रकारार्थसंविधानरसाश्रयः ॥
बुधैः संस्कृतबाहुल्यो वाग्व्यापारो नटाश्रयः ॥
भारतीत्युदिता तस्याश्चत्वार्यङ्गानि कल्पयेत् ।
प्ररोचना च वीथी प्रहसनं चामुखं तथा ॥
प्ररोचना प्रशंसात उन्मुखीकरणं मतम् ।
वीथी प्रहसनं चापि स्वप्रसङ्गेन वक्ष्यते ॥
नटी विदूषको वापि नटो वा पारिपार्श्वकः ।
सूत्रधारेण संलापं कुरुते यत्र चित्रगीः ॥
स्वकार्यप्रस्तुताक्षेपि तत्स्यात्प्रस्तावनामुखम् ।
एतस्य त्रीणि चाङ्गानि कथोद्घातः प्रवर्तकः ॥
प्रयोगातिशयश्चेति तेषां लक्ष्माणि च ब्रुवे ।
इतिवृत्तसमं वाक्यमर्थं वा यत्र सूत्रिणः ॥
गृहीत्वा प्रविशेत्पात्रं कथोद्घातो द्विधेति सः ।
प्रवृत्तकालसदृशगुणवर्णनया तथा ॥
सूचितस्यैव पात्रस्य प्रवेशः स्यात्प्रवर्तकः ।
एषोऽयमित्युपक्षेपात्सूत्रधारप्रयोगतः ॥

पात्रप्रवेशो यत्रायं प्रयोगातिशयो मतः ।
वीथ्यङ्गान्यामुखाङ्गत्वादुच्यन्ते तान्यपि क्रमात् ॥
उद्घात्यकावलगिते प्रपञ्चत्रिगते छलम् ।
वाकेल्यधिबले गण्डमवस्यन्दितनालिके ॥
असत्प्रलापव्याहारमार्दवानि त्रयोदश ।
गूढार्थपदपर्यायमालारूपेण वा पुनः ॥
प्रश्नोक्तिमालारूपेणाप्युद्घात्यकमिति द्विधा ।
अन्यकार्यमिषादन्यकार्यस्य कारणं तथा ॥
द्विधावलगितं त्वन्यकार्याच्च स्वार्थसाधनम् ।
असद्भूतमिथःस्तोत्रं प्रपञ्चो हास्यकारकम् ॥
सूत्रधारादिभिः पूर्वं संलापो यत्र चि(च)त्रिभिः ।
शब्दसाम्यादनेकार्थयोजनं त्रिगतं मतम् ॥
प्रियाभैरप्रियैर्वाक्यैर्वञ्चनं छलमीरितम् ।
साकाङ्क्षस्यापि वाक्यस्य निवर्तनमथापि वा ॥
उक्तिप्रत्युक्तिरूपा वाग्वाकेलिरिति च द्विधा ।
स्पर्धयान्योन्यवाक्यस्याधिक्यं चाधिबलं हि तत् ॥
प्रस्तुतार्थविरोधेन गण्डः स्यात्सहसोदितम् ।
उक्तार्थस्यान्यथाख्यानमवस्यन्दितमीरितम् ॥
सोपहासनिगूढार्थमालिका नालिका मता ।
अन्तर्लापा बहिर्लापा चेतीयं द्विविधा मता ॥
प्रवह्लिकां च तां केचित्केचिदूचुः प्रहेलिकाम् ।
असंबद्धकथालापोऽसत्प्रलापः प्रकीर्तितः ॥
हास्यलोभनकृद्वाक्यं व्याहारोऽन्यार्थकं मतम् ।
दोषाणां यद्गुणत्वेन कथनं मार्दवं हि तत् ॥
गुणानामपि दोषत्वकथनं चापि मार्दवम् ।
इत्येतान्यामुखाङ्गानि कथितानि त्रयोदश ॥

आशीर्नमस्क्रियावस्तुनिर्देशान्यतमाश्रया ।
चन्द्रनामाङ्किता प्रायो मङ्गलार्थपदोज्ज्वला ॥
अष्टभिर्दशभिः श्रेष्ठा तथा द्वादशभिः पदैः ।
अष्टादशपदैर्वापि द्वाविंशत्या पदैर्युता ॥
काव्यार्थसूचनोपेता सा या नान्दी प्रकीर्तिता ।
अ(यः) सूत्रय(ये)न्नायकस्य वस्तुनोऽपि गुणान्कवेः ॥
रङ्गप्रसाधनकरः सूत्रधारः प्रकीर्तितः ।
भरतेनाभिनीतं यो भावं नानारसाश्रयम् ॥
परिष्करोति पार्श्वस्थः स भवेत्पारिपार्श्व(र्श्वि)कः ।
स एवार्यो मारिषश्च मार्षको मार्ष इत्यपि ।
नर्मभेदप्रयोगज्ञो हास्यकृन्नायकस्य च ।
नर्मवादी स वै नर्मसचिवश्च विदूषकः ॥
चतुःषष्टिकलाभिज्ञा सर्वभाषाविशारदा ।
नटानुयोक्त्री कृत्येषु नटस्य गृहिणी नटी ॥
यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये ।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गस्तदुच्यते ॥
पूर्वरङ्गस्य चाङ्गानि द्वाविंशतिर्मतानि च ।
तत्राप्यवश्या नान्दीति कीर्तिता भरतादिभिः ॥
अङ्गाङ्गिभावसंपन्नसमस्तरससंश्रयात् ।
प्रकृत्यवस्था संध्यादिसंपत्त्युपनिबन्धनात् ॥
आहुः प्रकरणादीनां नाटकं प्रकृतिं बुधाः ।
[1]अतिदेशबलप्राप्तनाटकाङ्गोपजीवनात् ॥
अन्यानि रूपकाणि स्युर्विकारा नाटकस्य हि ।
अतश्च लक्षणं पूर्वं नाटकस्य विधीयते ॥
दिव्येन वा मानुषेण धीरोदात्तेन संयुतम् ।
धर्मकामार्थशृङ्गारप्रधानरससंश्रयम् ॥

---

१. 'प्रकृतिवद्विकृतिः कर्तव्या' इत्यतिदेशः.

वृत्तेन प्रख्यातमिश्रकल्पितान्यतमेन च ।
प्रासङ्गिकेन चाप्याधिकारिकेन(ण) समन्वितम् ॥
साङ्गैर्मुखादिभिः पञ्चसंधिभिश्च समन्वितम् ।
विष्कम्भकादिसंयुक्तं नाटकं स्यात्रिवर्गदम् ॥
एतादृङ्नाटककृतौ प्रकारो वक्ष्यते मया ।
विधाय प्रथमं पूर्वरङ्गं सूत्रिणि निर्गते ॥
प्रविश्यान्यस्तद्वदेव काव्यार्थस्थापको नटः ।
सूचयेद्वस्तु बीजं वा मुखं वा पात्रमेव वा ॥
तत्र दिव्यं वस्तु दिव्यो भूत्वा मर्त्यं च मानुषः ।
मिश्रं तन्मर्त्यान्यतरो भूत्वेति कवयो विदुः ॥
तत्र पद्यैश्च काव्यार्थसूचकैर्मधुराक्षरैः ।
रङ्गं प्रसाध्य साङ्गां च भारतीमाश्रयेत्ततः ॥
ऋतुं कंचिदुपादाय ततः कार्या प्ररोचना ।
वीथ्यङ्गानि ततः पञ्चत्साङ्गा प्रस्तावना ततः ॥
प्रस्तावनाङ्गान्यतमेनार्थं वा पात्रमेव वा ।
सूचयित्वा तदन्ते च सूत्री गच्छेच्छलात्ततः ॥
आद्यङ्कादौ च विष्कम्भं कुर्यादित्येव केचन ।
द्वितीयादिषु चाङ्केषु कुर्यादित्यपि केचन ॥
अपेक्षितं परित्यज्य विस्तरं वस्तु नीरसम् ।
यदा संदर्शयेदादौ कुर्याद्विष्कम्भकं तदा ॥
यदा तु सरसं वस्तु मूलादेव प्रवर्तते ।
आदावेव तदाङ्कः स्यादित्येव कविसंमतम् ॥
प्रविश्य मर्त्यो दिव्यो वा धीरोदात्तश्च नायकः ।
इतिवृत्तं महोत्साहोऽभिनयेदाधिकारिकम् ॥
तत्र साङ्गाः प्रयोक्तव्या मुखाद्याः पञ्च संधयः ।
मुखादिसंधिष्वङ्गानां क्रमोऽयं न विवक्षितः ॥

क्रमस्थानादृतत्वेन भरतादिभिरादिमैः।
लक्ष्येषु व्युत्क्रमेणापि कथनेन न दोषता॥
रसभावानुरोधेन प्रयोजनमपेक्ष्य च।
साकल्यं कार्यमङ्गानामित्याचार्याः प्रचक्षते॥
केषांचिदेषामङ्गानां वैकल्येऽपि न दुष्टता।
विष्कम्भचूलिकाङ्कास्य प्रवेशाङ्कावतारणैः॥
एभिः सूच्यं सूचयित्वा दृश्यमङ्के प्रदर्शयेत्।
एको रसो भवेत्तत्र शृङ्गारो वीर एव वा॥
तदङ्गत्वेन च रसा अन्ये सर्वे यथोचितम्।
अद्भुतः स्यान्निर्वहणे तथा वस्तुरसान्न च॥
दूरविच्छिन्नतां यायात्तिरोदध्याद्रसं न च।
दूराध्वानं वधं युद्धं राज्यदेशादिविप्लवम्॥
सरोधं भोजनं स्नानं सुरतं चानुलेपनम्।
अधिकारिवधं नाङ्के निबध्नीयात्कदाचन॥
एकं प्रयोजनश्लिष्टे तत्रैवासन्ननायके।
तदा विदूषकाद्यैश्च प्रवेशाद्यैश्च सूचयेत्॥
प्रविष्टानां च पात्राणामङ्कान्ते निर्गमो भवेत्।
नाटकेष्वपि सर्वेषु पञ्चन्यूना दशाधिकाः॥
अङ्का नैवात्र कर्तव्या इतीदं सर्वसंमतम्।

इति नाटकम्।

अथ प्रकरणेऽमात्यो विप्रो वा वैश्य एव वा॥
धीरशान्तो भवेन्नेता धर्मकामार्थतत्परः।
स्वविपत्तरणोद्युक्तो वृत्तं स्यात्कविकल्पितम्॥
नायिका कुलजा वापि वेश्या वा तद्द्वयं क्वचित्।
तद्भेदात्त्रिविधं चेदं तृतीयं धूर्तसंकुलम्॥
अत्र वेश्या प्राकृतं तु कुलजा संस्कृतं वदेत्।

शेषं नाटकवत्सर्वं मुखसंध्यादिकं मतम् ॥

इति प्रकरणम् ।

भाणे तु धूर्तो निपुण एक एव पटुर्विटः ।
स्वपराभ्यां चानुभूतं चरित्रमुपवर्णयेत् ॥
भूयसा भारती वृत्तिर्वस्तु स्यात्कविकल्पितम् ।
सौभाग्यशौर्ययोश्चोपवर्णनेनैव सूचयेत् ॥
शृङ्गारवीरौ च साङ्गे मुखनिर्वहणे तथा ।
एकोऽङ्कस्त्वेकपात्रं स्यात्कुर्यादाकाशभापणम् ॥

इति भाणः ।

अथ प्रहसने हास्यप्रधानं रस उच्यते ।
न त्वेकपात्रनियमः शेपं सर्वं च भाणवत् ॥
शुद्धवैकृतसंकीर्णभेदात्तत्त्रिविधं मतम् ।
पापण्डविप्रप्रभृतिनटचेटविटाकुलम् ॥
वेपभापादिसहितं शुद्धं हास्यवचोऽन्वितम् ।
कामुकादिवचोवेपैः पण्ढकञ्चुकितापसैः ॥
प्रहासाभिनयप्रायं विकृतं वैकृतं मतम् ।
संकीर्णं च समाकीर्णं वीथ्यङ्गैर्धूर्तसंकुलम् ॥

इति प्रहसनम् ।

डिमे बीभत्सकरुणरौद्रवीरभयानकाः ।
साद्भुताः पड्रसा दीप्तास्तथा रौद्रप्रधानकाः ॥
मायेन्द्रजालसंग्रामसूर्यचन्द्रग्रहादयः ।
नायका देवगन्धर्वयक्षरक्षोमहोरगाः ॥
भूतप्रेतपिशाचाद्याः पोडशात्यन्तमुद्धताः ।
चत्वारोऽङ्का निर्विमर्शाः संधयः कैशिकीं विना ॥
वृत्तयो वस्तुप्रख्यानं शेपं नाटकवन्मतम् ।
असतो वस्तुनो माया सद्रूपोद्भावना तथा ॥
इन्द्रजालः स्थितार्थस्य मन्त्रचूर्णौषधादिभिः ।

अदर्शनमपारोक्ष्यमन्यथाकृतिरुच्यते ॥

इति डिमः ।

व्यायोगे तूद्धतो नेता वृत्तं प्रख्यातमीरितम् ।
षड्रसा डिमवद्दीप्ता अस्त्रीकारणसंयुगः ॥
बहुभिश्च तथैकाङ्क एकाहचरितं तथा ।
विमर्शगर्भरहिताः संधयोऽन्यच्च पूर्ववत् ॥

इति व्यायोगः ।

अथो समवकारे तु निर्विमर्शाश्च संधयः ।
नेतारे द्वादश पृथक्फला देवासुरादयः ॥
सूक्ष्मा स्यात्कैशिकी वृत्ती रसा वीरप्रधानकाः ।
वीथ्यङ्गानां च संप्राप्तिर्यथासंभवमीरिता ॥
अङ्कास्त्रयस्तत्र चाद्ये मुखप्रतिमुखौ तथा ।
वस्तुस्वभावदैवारिकृताः स्युः कपटास्त्रयः ।
कथामपि निबध्नीयात्तथा द्वादशनालिकाम् ।
द्वितीयेऽङ्केऽपि चतुर्नालिकावधिकां कथाम् ॥
पुररोधरणाग्न्यादिनिमित्ता विद्रवास्त्रयः ।
तृतीयेऽङ्के निबद्धव्या कथा चापि द्विनालिका ॥
धर्मार्थकामानुगुणास्तिस्रः शृङ्गाररीतयः ।
द्वयोरन्त्याङ्कयोर्गर्भनिर्वाहौ च यथोचितम् ॥
सर्वं नाटकवच्छिष्टमन्यत्प्रस्तावनादिकम् ।
नालिकाघटिकाद्वन्द्वं सार्धं वा घटिकाद्वयम् ॥

इति समवकारः ।

वीथ्यां तु कैशिकी वृत्तिः शृङ्गारस्तु प्रधानकः ।
उद्घात्यकादीन्यङ्गानि संध्यङ्गादि च भाणवत् ॥
एकपात्रप्रयोगो वा तथा पात्रद्वयं मतम् ।

इति वीथी ।

अथाङ्के प्रख्यातमिति वृत्तं बुध्वा प्रपञ्चयेत् ॥

स्त्रीणां विलासो वाग्युद्धं प्रधानं करुणो रसः ।
नायकाः प्राकृता मर्त्याः संध्यङ्काङ्गादि भाणवत् ॥

इत्यङ्कः ।

ईहामृगे मिश्रवृत्तं चतुरङ्कं त्रिसंधिकम् ।
मर्त्यदिव्यौ च नियमान्नायकप्रतिनायकौ ॥
दिव्यस्त्रियमनिच्छन्तीं हर्तुकामौ समुद्धतौ ।
प्रख्यातौ कामुकावन्त्यो विपर्यासादयुक्तकृत् ।
अवधं युद्धमन्योन्यं व्याजाद्युद्धनिवारणम् ।
शृङ्गाराभास एवास्मिन्नन्यनाटकवन्मतम् ॥

इतीहामृगः ।

नाटिकां च प्रकरणीं रूपकं केचिदूचिरे ।
नाटिकायां ख्यातवृत्तं भारती वृत्तिरिष्यते ॥
स्त्रीबाहुल्यं तथाङ्कास्तु चत्वारो नायिका पुनः ।
सा दिव्यमर्त्यान्यतरा सदान्तःपुरवासिनी ॥
मुग्धा देवी वशगता तादृक्सुन्दररूपिणी ।
नायकस्तु प्रवर्तेत तद्देवीत्रासशङ्कितः ॥
सा तु देवी प्रगल्भा च गम्भीरा मानिनी तथा ।
तदानुकूल्यादन्ते च तयोरेकत्र संगमः ॥
सा नायिका तु वचसा नानुरागं प्रकाशयेत् ।
कैशिक्यङ्गानि चत्वारि शेषं नाटकवन्मतम् ॥

इति नाटिका ।

अथ प्रकरणिकायां तु वस्तु स्यात्कविकल्पितम् ।
नायिकाङ्कादि सर्वं तु नाटिकायां यथा तथा ॥

इति प्रकरणिका ।

एवं निरूपितं साङ्गं दशरूपकलक्षणम् ।
प्राचामाधुनिकानां च मतान्यालोच्य शक्तितः ॥

जलजनिजनिजायाप्रेमपाकेन गोपीजनमनसिजकेलीलम्पटे लम्पटेन ।
गुहपुरनिलयेन प्रोद्धृतो नृत्यविन्दुः सुरकुसुममरन्दे चारुचम्पूप्रवन्धे ॥

इति श्रीमद्धटिकाशतशतघण्टाविहिताष्टभाषासरसकविताचरणनिपुणस्य वासुदेवयोगीश्वरस्यान्तेवास्यन्यतमस्य गुहपुरवासशर्मणः कृष्णशर्मणः कवेः कृतौ मन्दारमरन्दे चम्पूप्रवन्धे नर्तनविन्दुः सप्तमः समाप्तिमगमत् ।

---

शुद्धविन्दुः ।

शुद्धविन्दावत्र लक्ष्माचक्ष्महे लक्ष्यलक्षितम् ।
प्रस्फुटं भेदसिद्ध्यर्थं नायकानां परस्परम् ॥
महाप्रबन्धमूलं तु नेता सीतापतिर्यथा ।
सौन्दर्यौदार्यगाम्भीर्यमाधुर्यस्थैर्यशक्तयः ॥
लोकानुरागमहिममहाभाग्यकुलीनताः ।
तेजोवैदग्ध्यलालित्यवाग्मिताधर्मसंग्रहाः ॥
पण्डाविलासकरुणास्पर्धातारुण्यशुद्धयः ।
इति द्वाविंशतिर्नेतुर्गुणा अन्ये यथोचितम् ॥
सौन्दर्यं रूपलावण्यपरिलालितदेहता ।
त्वामालिखन्तीं कञ्जाक्ष [1]ननन्दां वीक्ष्य राधिका ।
लिलेखाह्नाय चतुरा कौसुमं कार्मकं करे ॥ १ ॥
औदार्यं त्यागताच्छील्यं प्रमोदपरिपोषितम् ॥
(?)मातङ्गमदमत्तालिपुञ्जमञ्जुलगुञ्जितम् ।
माधवस्य बुधागारं प्रागेवापाङ्गरञ्जितात् ॥ २ ॥
गाम्भीर्यं क्षोभसंभूतविकारपरिगोपनम् ।
मागधेन निरुद्धेयं मधुरा माधवाधुना ।
इति दूतवचः श्रुत्वा जहास मृदुलं हरिः ॥ ३ ॥
विकारहेतौ सत्त्वेऽपि माधुर्यं श्लक्ष्णरूपता ॥
युद्धसंनद्ध[2]पाकारिं पश्यन्नपि पुरो हरिः ।
कुसुमैः कुरुते सत्यासमेतः कर्णभूषणम् ॥ ४ ॥

---

१. चिन्त्योऽयं प्रयोगः. २. 'बिडौजाः पाकशासनः' इत्यमरः.

**स्थैर्यं प्रत्यूहबाहुल्येऽप्यप्रयत्ननिवर्तनम् ।**
अपि रोषकषायाक्षं तर्जितस्ताडितस्तया ।
दूतीं प्रस्थापयामास माधवो राधिकागृहम् ॥ ५ ॥
**शक्तिस्त्वसाध्यकार्यस्याप्यविलम्बेन साधनम् ॥**
साध्वीं कदम्बसंबद्धां तादृशीमपि राधिकाम् ।
अकरोत्स कुरङ्गाक्षीं वशेऽनायासतः क्षणात् ॥ ६ ॥
**लोकानुरागोऽनेकैश्च भावैः सर्वमनोहृतिः ॥**
वृद्धा मुकुन्दं गुरवः कुमारं कामं च कान्ता इतरे नृपालम् ।
मत्वा विरञ्च्यात्ममनोरविन्दैर्मालां ववन्धुर्हृदि माधवस्य ॥ ७ ॥
**महिमा सर्वसंपूज्यदेवांशत्वं प्रकीर्तितम् ॥**
कमलाकामुको देवो देवकीनन्दनोऽजनि ।
**सर्वाविपत्त्यसंपत्तिर्महाभाग्यमितीर्यते ।**
चिन्ताकान्तापरित्यागवशालीलावशं गतः ॥ ८ ॥
क्रिडत्याशाकरिव्यूहः कामं कृष्णे धराधरे ।
**महाकुलप्रसूतत्वं कुलीनत्वं विदुर्बुधाः ॥**
मुखमेवाह कृष्णस्य सुधाकरकुलोद्भवम् ॥ ९ ॥
**विपत्तावपि तेजोधिक्षेपाद्यसहनं मतम् ।**
राधिके न वदेदे(रे)वं तत्तादृग्गुणगुम्फिते ।
स कथं सहते भूयोऽप्यधिक्षेपवचस्तव ॥ १० ॥
**वैदग्ध्यमेकीकरणमप्यन्योन्यविरुद्धयोः ॥**
भुनक्ति सुखमब्जाक्षो निःसापत्न्यं महीं श्रियः ।
**शृङ्गारचेष्टा सहजा लालित्यं मृदुला मता ।**
जीयात्स्वाभाविकी चेष्टा तादृशी राधिकापतेः ॥ ११ ॥
आभीरभामिनीभावभावने शम्भलीसखी ।
**वाग्मिता नीरसोक्तावप्यलं पुष्टीकृतिर्मता ॥**
स एव माधवः सैव राधिकेति जनोत्तरम् ॥ १२ ॥
श्रुत्वावयोः समं सङ्गं सखे वक्तीति सोऽब्रवीत् ।

**प्रसिद्ध एव धर्मः स्यादिष्टापूर्तादिका कृतिः ।**

कृष्णादन्यो न लोकेष्ट इष्टाशिष्टादिपालनैः ॥ १३ ॥

**कार्योपयुक्तवस्तूनां संग्रहः संग्रहो मतः ॥**

सर्वसाधनसंपन्ने किमलभ्यं तव प्रभो ।

**सर्वविद्यासमप्रज्ञा पण्डाशब्देन गीयते ।**

वासराणां चतुःषष्ट्या सोऽग्रहीत्तावतीः कलाः ॥ १४ ॥

**गतिः सधैर्या दृष्टिश्च विलासः सस्मितं वचः ॥**

दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीम् ।
स्मेरेरिता च भणितिर्गुरुतां दधानो
वीरो रसः किमयमेत्युत दर्प एव ॥ १५ ॥

**अखेदापत्तिविषया चिद्वृत्तिः करुणा मता ।**

पूतनाघातनोद्युक्तमाधवस्य महात्मनः ।
अबलाहननत्रस्ता वैरल्यमसवो ययुः ॥ १६ ॥

**कृतचित्तविकारस्तु स्पर्धा स्वात्मगुणाधिके ॥**

काशीस्थितेर्नूतनशंकराणां साधारणे धूर्जटिलक्षणेऽपि ।
पार्थप्रहारव्रणजातचिह्नं प्राचीनमीशं प्रकटीकरोति ॥ १७ ॥

**तारुण्यं यौवनं प्रोक्तं**

अजातश्मश्रुभेदेन गतेन क्षणमित्रताम् ।
माधवेन धृतं राज्यमशिष्टकुलकण्टकम् ॥ १८ ॥

**शुद्धिः स्यात्परिपूतता ।**

कृष्णाङ्गुष्ठसरत्पाथः पुनाति भुवनत्रयम् ।

**(?)चतुर्विंशद्गुणान्केचिदूचिरे द्वादशापरे ॥**

**एतादृग्गुणगम्भीरस्त्रिवर्गी च धुरंधरः ।**

**यशःप्रतापसुभगो नेता स्यात्स चतुर्विधः ॥**

**धीरपूर्वोदात्तशान्तललितोद्धतभेदतः ।**

महासत्त्वोऽतिगम्भीरः कृपावानविकत्थनः ॥
स्थिरो निगूढाहंकारो धीरोदात्तो दृढव्रतः ।
तत्सत्त्वं तच्च गाम्भीर्यं तद्धैर्यं तादृशी कृपा ।
तत्तादृग्विनयत्यागः कृष्ण एव विराजते ॥ १९ ॥
विनयो दक्षता त्यागो माधुर्यं प्रियवादिता ॥
प्रज्ञा बुद्धिः कुलीनत्वं धर्मकामार्थकारिता ।
स्मृतिर्धृतिर्दयोत्साहः कलाज्ञानं च चातुरी ॥
इतीमेऽष्टादश गुणा धीरोदात्ते मनस्विनि ।
धीरः शान्तः प्रसन्नात्मा धीरशान्तो द्विजादिकः ।
प्रतिबोधयति व्यासो मुनीन्ब्रह्म सनातनम् ।
सदाचारो विवेकश्च समता च दया तथा ।
महिमा सत्यवाक्यत्वं धीरशान्तगुणा मताः ॥
निश्चिन्तो धीरललितः कलासक्तः सुखी मृदुः ।
उग्रसेने प्रतिष्ठाप्य राज्यं स सुखमश्नुते ॥ २० ॥
गुणाः स्युर्धीरललिते यौवनं स्थूललक्ष्यता ॥
प्रियंवदत्वं दाक्षिण्यं प्रियता च सुवेषता ।
दर्पमात्सर्यभूयिष्ठो मायाछद्मपरायणः ॥
धीरोद्धतश्चण्डवृत्तिः सुलभक्रुद्विकत्थनः ।
कल्पाग्निसदृशक्रोधकुटिलभ्रुकुटीपटुः ।
दृप्तक्षत्रकुलारण्यं दग्धुमायाति भार्गवः ॥ २१ ॥
शौर्यं तेजश्च चापल्यं साहसं च प्रतारणम् ॥
मात्सर्योत्साहगर्वाश्च धीरोद्धतगुणा मताः ।
कलावेदविशेषानुरक्तः शृङ्गारनायकः ॥
चतुर्धा धृष्टानुकूलशठदक्षिणभेदतः ।
अकापट्यं त्वितरयोर्वञ्चनं शठधृष्टयोः ॥
व्यक्तागा अपि निर्भीतिर्धृष्टो वितथकत्थनः ।

तस्या दृगञ्जनानीलमधरं गोपय क्षणम्।

एकस्यामेव कान्तायामनुकूलोऽनुरागवान्॥

दृशापि न स्पृशत्यन्यां रामस्तां जानकीं विना॥ २२॥

नायिकामात्रविदितपुरुविप्रियकृच्छठः॥

दृशैवालोकसे मां त्वं संनिधत्से परां हृदि॥ २३॥

अनेकास्वपि कान्तासु समात्मा दक्षिणः स्मृतः।

समं स ववृते तासु तारास्विव निशाकरः।

पतिश्चोपपतिश्चेति स चतुर्धा पुनर्द्विधा॥

पतिः पाणिग्रहीता स्याद्रुक्मिण्या माधवो यथा॥ २४॥

आचारहानिहेतुस्तु प्रियश्चोपपतिर्मतः।

गोपकान्ताजनैः सार्कं विजहार हरिः सुखम्।

पुनश्चतुर्धा नेता स्यान्नायकः प्रतिनायकः॥

अनुपूर्वो नायकश्च नायकश्चोपपूर्वकः।

तेषु सर्वगुणोपेतः कथाव्यापी स नायकः॥

रामचन्द्रः कथाव्यापी नेता रामायणे यथा॥ २५॥

अन्यायवाँस्तदुच्छेद्य उद्धतः प्रतिनायकः।

यथा तत्रैव पापात्मा रावणः प्रतिनायकः।

समो न्यूनोऽपि वा तस्य कनीयाननुनायकः॥

नेतुः कैश्चिद्गुणैर्हीन अपूज्यश्चोपनायकः।

नायकस्य गुणैर्हीनो नेता त्वाभासनायकः॥

पुनस्त्रिधा स गुणत उत्तमो मध्यमोऽधमः।

प्रकृतेः सात्त्विकोऽपि स्याद्राजसस्तामसोऽपि च॥

इति त्रिधा पुनर्नेता पुनर्द्वेधा प्रकीर्तितः।

साधारणस्तथासाधारणो ज्ञेयः परिग्रहात्॥

साधारणोऽनेकजानिरन्यो नियतभार्यकः।

पुनर्दिव्यस्त्वदिव्यश्च दिव्यादिव्य इति त्रिधा॥

नायकस्तत्र दिव्यस्तु पौलोमीपतिरुच्यते ।
विक्रमादिरदिव्यः स्यात्कृष्णादिरुभयात्मकः ॥
पुनश्चतुर्धा कथितः कामशास्त्रेषु जातितः ।
दत्तो भद्रः कूचिमारः पाञ्चाल इति सूरिभिः ॥
पद्मिनीवल्लभो दत्तो भद्रः स्याच्चित्रिणीप्रियः ।
पाञ्चालकूचिमारौ तु हस्तिनीशङ्खिनीप्रियौ ॥
उदात्तशान्तललितोद्धताः स्युर्धैर्यवृत्तितः ।
धृष्टादयश्च चत्वारः स्वव्यापारप्रवृत्तितः ॥
नायकानां पीठमर्दविटचेटविदूषकाः ।
कुर्वन्त्येते नायिकानुकूलने तु सहायताम् ॥
पताकानायकस्त्वन्यः पीठमर्दो विचक्षणः ।
नेतुश्चानुचरो भक्तः किंचिदूनश्च तद्गुणैः ॥
रामायणे च सुग्रीवो रामकार्यस्य साधकः ।
एकविद्यो विटश्चेटः संधानकुशलो मतः ॥
स्वराङ्गादिविकारेण हास्यकारी विदूषकः ।

वल्लभे चिररात्राय विप्रयुक्ते विलासिनि ।
नीवीविस्रंसनोद्युक्ते सोऽकूजत्कुक्कुटस्वरम् ॥ २६ ॥

कार्यान्तरे सहायास्तु मन्त्री स्वं वोभयं च वा ॥
नेतुर्धर्मसहायास्तु पुरोधा ऋत्विगादयः ।
सामाद्युपायेषु नेतुः सहायाः स्युर्यथोचितम् ॥

इति नायकप्रकरणम् ।

युवानुरञ्जनाकारचेष्टा शृङ्गारनायिका ।
वितनोति मुदं यूनां विलासैः सुन्दरीमणिः ॥
स्वीया च परकीया च सामान्या चेति सा त्रिधा ।
स्वीया तत्र त्रिधा मुग्धामध्याप्रौढाविभेदतः ॥
मुग्धा तत्र द्विधा ज्ञातयौवनाज्ञातयौवना ।
द्विधोभे शुद्धविश्रब्धनवोढाभेदतः पुनः ॥

प्रौढा रतिप्रियानन्दमोहितेति द्विधा मता ।
मध्याप्रौढे पुनस्त्रेधा धीराधीरोभयात्मना ॥
ज्येष्ठाकनिष्ठाभेदेन त्रिविधे ते पुनर्द्विधा ।
कन्यापरोढाभेदेन परकीयापि च द्विधा ॥
सामान्या गणिकादिः स्यात्सैकैवं कथिता बुधैः ।
सामान्यापरकीये द्वे प्रौढे इत्येव संमते ॥
विना मुग्धामष्टविधा अवस्थाभेदतश्च ताः ।
समुग्धाअप्यष्टविधा इत्येताः केचिदूचिरे ॥
स्वाधीनपतिका विप्रलब्धा वासकसज्जिका ।
विरहोत्कण्ठिता प्रोष्यद्वल्लभा खण्डिता तथा ॥
कलहान्तरिता चाभिसारिकेति विभेदतः ।
गुणतस्तास्त्रिधापि स्युरुत्तमामध्यमाधमाः ॥
पुनश्च तास्त्रिधा ज्ञेया दिव्यादिव्योभयात्मना ।
पुनस्त्रिधोद्धतोदात्ता ललिताशान्तिका इति ॥
अक्षता च क्षता यातायाता यायावरेत्यपि ।
पुनश्चतुर्धा कथिताः पूर्वैर्भोजादिभिर्बुधैः ॥
पद्मिनी चित्तिनी(त्रिणी) चैव शङ्खिनी हस्तिनीति च ।
पुनश्चतुर्धा कथिताः कामशास्त्रेषु जातितः ॥
कफिनी वातला पित्तला प्रकृत्या पुनस्त्रिधा ।
अथोक्तानां च भेदानां लक्षणोदाहृती ब्रुवे ॥
स्वामिन्येवानुरक्तात्मा सा स्वीया परिकीर्तिता ।
जानकी सेवते रामं वनेऽपि भवने तथा ।
तद्गुणाभर्तृशुश्रूषा शीलसंरक्षणक्षमा ॥
आर्जवं गुरुभक्तिश्च सदाचारो विवेकता ।
उदययौवना मुग्धा लज्जाविजितमन्मथा ॥
दृष्ट्वा नवरते कान्तं लज्जते वेपते वधूः ॥ २७ ॥

लज्जा भयमधैर्यं च चापल्यं चाल्पकोपता ।
उत्कण्ठा शिशुचेष्टा च भूषणेष्वपि तद्गुणाः ॥
यौवनस्य परिज्ञाने सति सा ज्ञातयौवना ।
पश्यन्ती स्वसखीं वीक्ष्य दृढं बध्नाति कञ्चुकम् ।
यौवनस्यापरिज्ञाने सा स्यादज्ञातयौवना ॥
किमिदं सखि मे वक्षो गाध(ढ)तामवगाहते ॥ २८ ॥
सा तु शुद्धनवोढा स्यादनिच्छन्त्यक्षमा रतम् ।
क्रोडीकृता बोधितापि यतते गन्तुमेव सा ।
सा विश्रब्धनवोढा स्यादिच्छन्त्यप्यक्षमा रतम् ॥
सुष्वाप भर्तृसविधे नीवीदत्तकराम्बुजा ॥ २९ ॥
लज्जामन्मथमध्यस्था मध्या चोद्भूतयौवना ।
कान्ता रहः प्रियतममद्रष्टुं द्रष्टुमीहते ।
सापराधे प्रिये कोपो व्यक्ताव्यक्तश्च मत्सरः ॥
सपत्नीष्वभ्यसूया च प्रायो मध्यागुणा मताः ।
स्मरमन्दीकृतव्रीडा प्रौढा संपूर्णयौवना ॥
आलिलिङ्ग स्वयं कान्ता दयितं मारसुन्दरम् ॥ ३० ॥
रतिप्रीतिश्च संमोहः प्रियाकर्षणकौशलम् ।
रतिप्रागल्भ्यमित्याद्याः प्रौढायाः कथिता गुणाः ॥
रतिप्रिया तु सुरतप्रमोदपरिलालिता ।
कर्णोत्पलं तयागोपि प्राप्ते कान्ते रतोद्यते ।
आनन्दमोहिता सङ्गसुखविस्मृततत्क्रिया ॥
सा रते दयिताश्लिष्टा व्यस्मरत्स्वां तनूमपि ॥ ३१ ॥
मध्या धीरा तु वद(च)ती सोत्प्रासं सागसं प्रियम् ।
सदा रामान्तरासक्तया श्रान्तोऽस्यास्व प्रिय क्षणम् ।
मध्या त्वधीरा परुषैः खेदयेद्वल्लभं रुषा ॥
तदेकासक्तचित्तस्य मयि ते कोऽयमादरः ॥ ३२ ॥

धीराधीरा तु वक्रोक्त्या सबाष्पं वदति प्रियम् ।
युवा कान्तश्च रागी त्वमित्युक्त्वाश्रु मुमोच सा ।
प्रौढा धीरा तु चातुर्यात्खेदयेद्वल्लभं रुषा ॥
जहौ प्रत्युद्गमात्तल्पं सागसं प्रियमीक्ष्य सा ॥ ३३ ॥
संतर्ज्य निष्ठुरं रोषादधीरा ताडयेत्प्रियम् ।
दृष्ट्वा कृतागसं कान्तमबध्नात्पुष्पमालया ।
धीराधीरा तु संतर्ज्य रत्यौदास्यं भजेत्प्रिये ॥
तल्पान्निष्कासयामास दयितं कलितागसम् ॥ ३४ ॥
स्नेहाधिक्यवती ज्येष्ठा भर्तर्यूना कनिष्ठिका ।
नेत्रे निमील्य कस्याश्चिच्चुम्बत्यन्यां रहः प्रियः ।
परकीया त्वप्रकटीकृतान्यपुरुषस्पृहा ॥
वसन्तवनसंपत्तिमीदृशीं वीक्ष्य सुन्दरि ॥ ३५ ॥
मम चित्तं पराधीनं किं वा कर्तुं समीहते ।
मृषोक्तिः साहसं चैव गोपनं च प्रतारणम् ।
संकेतचेष्टाचातुर्यं परकीया गुणा मताः ॥
तत्र कन्या त्वनूढा स्यात्सोत्कण्ठा पितृपालिता ।
कन्या सौधात्प्रेक्षते तमलसा लोलवीक्षणैः ॥ ३६ ॥
परोढा तु परेणोढा गुप्तान्यपुरुषस्पृहा ॥
सखि कुञ्जं निरीक्ष्येदं परस्मिन्रज्यते मनः ।
सामान्या धनिकोदारजनेष्वेवानुरागिणी ।
आढ्योऽस्त्युदारः कान्तोऽयमेनमुत्कण्ठते मनः ॥ ३७ ॥
मृषानुरागो मात्सर्यं रतितन्त्रप्रगल्भता ॥
प्रायो वित्तादिलाषाद्याः सामान्याया गुणा मताः ।
प्रियोपलालिता नित्यं स्वाधीनपतिका मता ॥
हृदापि न स्मरत्यन्यां मां विना दयितो मम ।
अस्यास्तु चेष्टाः कथिताः स्मरपूजामहोत्सवः ।
वनकेली जलक्रीडा कुसुमापचयादयः ॥

विप्रलब्धा तु संकेतं गतान्यासक्तवल्लभा ।
स यस्मान्नागतः कुञ्जं कस्या वा वर्तते गृहे ॥ ३८ ॥
निर्वेदचिन्ताखेदाश्रुमूर्च्छानिःश्वसितादयः ॥
दूतीसंप्रेषणाद्याः स्युर्विप्रलब्धागुणा मताः ।
भूषितात्मगृहा कान्तागमे वासकसज्जिका ॥
गेहं विभूष्य चात्मानं सा द्वारे त्वां प्रतीक्षते ।
अस्यास्तु चेष्टासंभोगमनोरथविचिन्तनम् ।
प्रियागमनमार्गाभिवीक्षाप्रभृतयो गुणाः ॥
चिरयत्यधिकं कान्ते विरहोत्कण्ठितोन्मनाः ।
समानय द्रुतं कान्तं सखि ते विहितोऽञ्जलिः ॥ ३९ ॥
अस्या गुणास्तु संतापो वेपथुश्चाङ्गसादनम् ॥
अरतिर्बाष्पमोक्षश्च स्वावस्थाकथनादयः ।
देशान्तरगते कान्ते खिन्ना प्रोषितवल्लभा ॥
दूरस्थो दयितो मारस्तुदत्यद्य कथं सहे ।
अस्यास्तु जागरः कार्श्यं निमित्तादिविलोकनम् ।
मालिन्यमनवस्थानं प्रायः शय्यानिषेवणम् ॥
ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता ।
मागा मत्सविधं धूर्त या प्रिया तद्गृहं व्रज ॥ ४० ॥
अस्यास्तु चिन्ता निश्वासस्तूष्णींभावोऽश्रुमोचनम् ॥
मुहुः प्रलाप इत्याद्याश्चेष्टा इष्टा मनीषिणाम् ।
कलहान्तरिता पश्चात्तप्ता निर्याप्य नायकम् ॥
परुषं ब्रुवतीं धिङ्मां सरसे तादृशि प्रिये ।
अस्यास्तु भ्रान्तिसंतापमोहनिःश्वसितज्वराः ।
मुहुः प्रलाप इत्याद्याः कथिताः स्युर्गुणा बुधैः ॥
कान्ताभिसरणोद्युक्ता स्मरार्ता साभिसारिका ।
ययौ सा प्रियसंकेतं स्वयमेव स्मरार्दिता ॥ ४१ ॥

दिवाश्यामाविभेदेन द्विविधा साभिसारिका ॥
दिवाभिसारिका सा स्याद्या दिवैव सरेत्प्रियम् ।
सलिलाहरणव्याजाद्ययौ कुञ्जं प्रियस्पृशम् ।
श्यामाभिसारिका सा स्याद्या रात्रौ सरति प्रियम् ॥
विलोक्य स्वजनान्सुप्तान्प्रियसंकेतमाययौ ॥ ४२ ॥
ज्यौत्स्नीतमस्विनीभेदादियं चापि पुनर्द्विधा ।
शुभ्रवस्त्रा सरेत्कान्तं रात्रौ ज्यौत्स्न्यभिसारिका ॥
क्षौमं वसाना सा याति प्रियं चन्दनचर्चिता ।
नीलवेषा सरेत्कान्तं तमस्विन्यभिसारिका ।
प्रियान्तिकं प्रयात्येषा धृतनीलनिचोलिका ॥ ४३ ॥
ज्योत्स्नायानपरा त्वाद्या तमोयानपरापरा ॥
यातमात्रविभेदेन भेदा एवं प्रकीर्तिताः ।
अस्याः संतापचिन्ताद्या विक्रियाः स्युर्यथोचितम् ॥
उत्तमा हितकर्त्री स्यादहितं कुर्वति प्रिये ।
कान्तं कृतागसमपि प्रियं सदकरोत्प्रिया ।
हिताहितोक्तिर्हिताहितकर्त्री च मध्यमा ॥
तताड लीलापद्मेन रुषा कान्तं कृतागसम् ॥ ४४ ॥
प्रसीदेति ब्रुवाणं तं पुनः प्रेम्णा व्यभूषयत् ।
अधमा कथिता या सा हितेऽप्यहितकारिणी ।
अनागसं पादगतमपि कान्तं व्यभर्त्सयत् ॥ ४५ ॥
दिव्याः शच्यादयः प्रोक्ता अदिव्या मालतीमुखाः ॥
दिव्यादिव्या इति प्रोक्ता जानकीरुक्मिणीमुखाः ।
गर्वशालिन्युद्धता स्यादुदात्ता गूढमानिनी ॥
ललिता साध्यमानेहा शान्ता निर्मानमानसा ।
उदात्तैव भवेद्धीराथाधीरा तूद्धता मता ॥
ललिता तु भवेन्मुग्धा शान्ता स्वीयोत्तमा मता ।
भुक्तान्येन पुरा पश्चादूढान्येनाक्षता मता ॥

भुक्ता शंक्तिसुतेनोढा राज्ञा सत्यवती यथा ।
गते भर्तरि यद्यन्यं श्रिता सा तु क्षता मता ।
यथा तारा रविसुतं निहते वालिनि प्रिये ॥ ४६ ॥
यातायाता तु युगपदूढानेकैस्तु भर्तृभिः ॥
यथा पाण्डुसुतैरूढा द्रुपदस्य कुमारिका ।
ऊढैकेन तु संत्यक्ता क्रमाद्यायावरा मता ।
यथा बहुवरैरूढा माधवी चोपलात्मजा ॥ ४७ ॥
पद्मिनी चन्द्रवदना शिरीषमृदुला तथा ॥
लज्जा मानवती श्यामा गुरुसेवारता सदा ।
चित्रिणी लोलनयना शिल्पसंगीतलोलुपा ॥
तन्वङ्गी कुञ्जरगतिर्भृङ्गी श्यामलकुन्तला ।
शङ्खिनी स्याद्बृहन्मध्या कोपिन्यल्पस्तनी तथा ॥
दीर्घपादा द्रुतगतिः कुटिलाक्षी च पिङ्गला ।
हस्तिनी बहुभुक्क्रूरा निस्त्रपा पिङ्गकुन्तला ॥
ह्रस्वा स्थूलाधरा गौरशरीरामन्दगामिनी ।
कफिनी दृढरागा स्याच्छ्यामा सुस्निग्धलोचना ॥
वातुला तु कठोराङ्गी चञ्चला कृष्णपाणिजा ।
श्यामधूसरवर्णा च बहुभोज्या प्रलापिनी ॥
पित्तला शोणनयना गौराङ्गी कुशला रते ।
सा चतुर्धा पुनरपि नायिका प्रतिनायिका ॥
उपपूर्वा तथा चानुपूर्विका नायिकेति च ।
स्यात्कथाव्यापिनी सर्वगुणयुक्ता च नायिका ॥
यथा द्रुपदजा प्रोक्ता वेणीसंहारनाटके ।
हेतुरीर्ष्यारुडादीनां सपक्षा प्रतिनायिका ।
दुर्योधनस्य दयिता तत्र भानुमती यथा ॥ ४८ ॥
तस्याः कैश्चिद्गुणैर्हीना पूज्या चैवोपनायिका ॥

१. पराशरेण.

समा न्यूनापि वा किंचित्कनीयस्यनुनायिका ।
संबन्धिनी भिक्षुकान्ता दासी मालिककामिनी ॥
तक्रविक्रेतृका बाला रजकी शिल्पिनी नटी ।
कारुकान्ता सखी धात्री सैरन्ध्री प्रतिगेहिका ॥
लिङ्गिनी दूतिका चामूः सहाया नेतृसंगमे ।
भावो हावश्च हेला च कान्तिः शोभा प्रगल्भता ॥
लीला विलासो विच्छित्तिर्विभ्रमः किलकिञ्चितम् ।
मोट्टायितं कुट्टमितं बिब्बोको ललितं तथा ॥
चकितं विहृतं हासो दीप्तिर्धैर्यं कुतूहलम् ।
माधुर्यं च तथौदार्यमिति त्र्यधिकविंशतिः ॥
कामिनीनामलंकारा यौवने परिकीर्तिताः ।
भाव इत्युच्यते प्राज्ञै रसाभिज्ञानयोग्यता ॥
शृण्वन्ती कृष्णचरितं राधा किंचिद्विलज्जते ।
ईषद्दृष्टविकारः स्याद्भावः प्रेमाभिसूचकः ।
श्रुत्वास प्रेयसो वृत्तं किंचिदुत्पुलका वधूः ॥ ४९ ॥
सुव्यक्तविक्रियो भावो हेला शृङ्गारसूचकः ॥
सस्मितान्सानुरागार्द्रान्कटाक्षान्किरति प्रिया ।
मन्मथाप्यायिनी सर्वशोभा कान्तिरिति स्मृता ।
मुखे हासरुचा धूतं कुचे हाररुचा हृतम् ।
पादे नखरुचा भीतमालम्बे कचं तमः ॥ ५० ॥
रूपोपभोगतारुण्यैः शोभाङ्गानां विभूषणम् ॥

प्राचीनम्—

तां प्राङ्मुखीं तत्र निवेश्य बालां क्षणं विलम्बेन पुरो निषण्णाः ।
तादृक्षशोभाह्रियमाणनेत्र्यः प्रसाधने संनिहितेऽपि सख्यः ॥ ५१ ॥

प्रगल्भताङ्गसादः स्यादमनः क्षोभपूर्वकः ।
तथा व्रीडा विधेयापि तथा मुग्धापि सुन्दरी ।

१. 'आस' इति 'अस गतिदीप्त्यादानेषु' इत्यस्य 'दिदीपे' इत्यर्थकम्.

कलाप्रयोगे चातुर्ये सखीष्वाचार्यतां गता ॥ ५२ ॥

**प्रियानुकरणं लीलावाग्भिर्गत्यादिचेष्टितैः ॥**

मनोवाक्कायचेष्टाभिस्त्वामेवानुकरोति सा ।

**तात्कालिको विकारस्तु विलासः प्रियदर्शनात् ।**

मां विलोक्यातनोदङ्गभङ्गमुन्नमितस्तनम् ॥ ५३ ॥

**विच्छित्तिरतिरम्यत्वमत्यल्पैरपि भूषणैः ॥**

प्राचीनम्—

अधरे नववीटिकानुरागो नयने कज्जलमुज्ज्वलं दुकूलम् ।
इदमाभरणं नितम्बिनीनामितरद्भूषणमङ्गदूषणाय ॥ ५४ ॥

**विभ्रमस्त्वरया काले भूषास्थानविपर्ययः ।**

कटौ हारं कुचे काञ्चीं कृत्वा तं द्रष्टुमुत्वरा ।

**रोषाश्रुहर्षभीत्यादेः संकरः किलकिञ्चितम् ॥**

गृहीते हरिणा चादौ कुञ्जे राधाकुचांशुके ॥ ५५ ॥

हसति भ्रुकुटीं धत्ते मुहुर्नृत्यति वेपते ।

**मोट्टायितं मिषादिष्टकथादौ भावसूचनम् ।**

व्याजात्कृतोऽपि कान्तस्य प्रस्तावे सस्मितानना ॥ ५६ ॥

**संमर्देऽपि सुखाधिक्यं रतौ कुट्टमितं मतम् ॥**

मुदमाप प्रियकृतैर्नखदन्तक्षतादिभिः ।

**मनाक्प्रियकथालापे बिब्बोकोऽनादरक्रिया ।**

भुग्नभ्रु नमयत्यास्यं निशम्य प्रेयसः कथाम् ।

**सुकुमाराङ्गविन्यासो ललितं परिकीर्तितम् ॥**

कलक्कणितमञ्जीरं याति सा मदमन्थरम् ॥ ५७ ॥

**गाम्भीर्यभङ्गभयजं संभ्रमं चकितं विदुः ।**

आलोकयंती विजने नखक्षतं कृत्वा कुचं त्यक्तपटं कराम्बुजे ।
सीत्कुर्वती चापि मुहुर्मदागमे चकार यत्सास्तु तदेव मे सदा ॥५८॥

**विहृतं प्राप्तकार्यस्य वाक्यस्याकथनं ह्रिया ॥**

केलये याचिता राधा प्रियं नोवाच किंचन।
आकस्मिकं स्मितं हासो यौवनादिविकारजम्।
मय्यागच्छति सा चक्रे विनाहेतुं स्मितं स्मितम्॥ ५९॥
अलंकारसमुद्भूतो दीप्तिः कान्तेश्च विस्तरः॥
लिलेख मकरीं कान्ता घुसृणेन कपोलयोः।
तावलंचक्रतुस्तस्या मकरीं मकरीनतौ (?)॥ ६०॥
धैर्यं साङ्करिकृच्छ्रेऽपि मर्यादादेरलङ्घनम्।
मारस्तुदतु मां कामं न गच्छेद्धूर्तमन्दिरम्।
रम्यदृष्टौ चापलं तु कुतूहलमितीर्यते॥
तदाननं मुहुस्तन्वि द्रष्टुमुत्कण्ठते मनः॥ ६१॥
माधुर्यं सुन्दरानर्घ्यभूषभावेऽपि रम्यता।
कान्ताङ्गे भूषणारोपो जनदुर्दृष्टिभीतितः।
औदार्यमनुरागस्तु नायके सहजः सदा॥
अनागसि यथापूर्वं सागस्यद्य तथैव सा॥ ६२॥

इति नायिकाप्रकरणम्।

व्यापाररूपिणी वृत्ती रसावस्थानसूचिका।
द्विधा शब्दार्थभेदेन सा द्वे अपि चतुर्विधे॥
कैशिक्यारभटी चैव सात्वती भारतीति च।
शब्दवृत्तिरिति प्रोक्ता शब्दव्यापाररूपिणी॥
अर्थवृत्तिरिति प्रोक्ता नेतृव्यापाररूपिणी।
शब्दवृत्तिं चार्थवृत्तिमप्यहं क्रमशो ब्रुवे॥
अत्यर्थसुकुमारार्णसंदर्भा कैशिकी मता।
ददर्श कान्ता सस्नेहं कान्तं कन्दर्पसुन्दरम्।
नृत्तगीतविलासादिमृदुशृङ्गारचेष्टितैः॥
समन्विता भवेद्वृत्तिः कैशिकी श्लक्ष्णभूषणा।
अस्यास्त्वङ्गानि चत्वारि नर्म तत्पूर्वका इमे॥
स्फूर्जः स्फोटश्च गर्भश्च लक्ष्मैतेषां क्रमाद्ब्रुवे।

शृङ्गाररसभूयिष्ठः प्रियचित्तानुरञ्जनः।
अग्राम्यपरिहासश्च नर्म तत्तु त्रिधा मतम्।
शृङ्गारहास्यजं शुद्धहास्यजं भयहास्यजम्॥
शृङ्गारहास्यजं नर्म त्रिविधं परिकीर्तितम्।
संभोगेच्छाप्रकटनादनुरागनिवेशनात्॥
तथा कृतापराधस्य प्रियस्य प्रतिभेदनात्।
संभोगेच्छाप्रकटनं त्रिधा वाग्देहचेष्टितैः॥
अनुरागप्रकाशोऽपि त्रिधा वाग्देहचेष्टितैः।
प्रियापराधनिर्भेदोऽप्युक्तस्त्रेधैव पूर्ववत्॥
शुद्धहास्यजमप्युक्तं त्रिधा वाग्देहचेष्टितैः।
हास्याद्भयेन सहिताज्जनितं भयहास्यजम्॥
तद्द्विधा मुख्यमाङ्गं च तद्द्वयं च पुनस्त्रिधा।
वाग्देहचेष्टितैरेवं नर्माष्टादशधोदितम्॥
नर्मस्फूर्जो भयात्सौख्यव्यापारो नवसंगमे।
नर्मस्फोटस्तु भावानां सूचितात्परसो लवैः॥
छन्ननेत्रप्रतीचारो नर्मगर्भोऽर्थहेतवे।
अत्युद्धतार्णसंदर्भा वृत्तिरारभटी मता॥
क्रुद्धः परश्वधच्छिन्नक्षत्रियोऽभ्येति भार्गवः॥ ६३॥
मायेन्द्रजालप्रचुरां चित्रयुद्धक्रियामयीम्।
छेद्यैर्भेदैः प्लुतैर्युक्तां वृत्तिमारभटीं विदुः॥
अङ्गान्यस्यास्तु चत्वारि संक्षिप्तिरवपातनम्।
वस्तूत्थापनसंफेटाविति पूर्वे बभाषिरे॥
संक्षिप्तिरिह सा प्रोक्ता मायया वस्तुगोपनम्।
विभ्रान्तिरवपातः स्यात्प्रवेशद्रवविद्रवैः॥
तद्वस्तूत्थापनं यत्तु वस्तु मायोपकल्पितम्।
संफेटः स्यात्समाघातः कृतसंरम्भयोर्द्वयोः॥
ईषत्प्रौढार्णसंदर्भा सात्वती वृत्तिरिष्यते।

विसृज्य घोरं संसारं विहर त्वं हरौ मनः ।
हर्षप्रधाना संत्यक्तदोषभावा च सात्वती ॥
अङ्गान्यस्यास्तु चत्वारि संलापोत्थापकौ तथा ।
संघात्यकस्तृतीयः स्याच्चतुर्थः परिवर्तकः ॥
परस्परं समालापः संलापो रसगर्भितः ।
प्रेरणं यत्परस्यादौ युद्धायोत्थापकस्तु सः ॥
अन्यस्य भेदनं यत्तु संघात्योऽर्थादिशक्तिभिः ।
पूर्वकार्येणान्यकार्यनिर्वाहः परिवर्तकः ॥
ईषन्मृद्वर्णसंदर्भा भारती वृत्तिरिष्यते ।
को वेद बालः फा(लो भा)लाक्षचापमारोपयेदिति ॥ ६४ ॥
धीरोदात्तचरित्रात्मा धर्मशृङ्गारसंश्रया ॥
शौर्यौदार्यगुणोपेता भारती वृत्तिरिष्यते ।
अस्यास्त्वङ्गानि चत्वारि निग्रहोऽनुग्रहस्तथा ॥
त्यागः स्वीकार इत्येवं कथितानि मनीषिभिः ।
कैशिक्याद्यर्थवृत्तीनां साङ्गानां सुगमत्वतः ॥
ग्रन्थगौरवभीतेश्च न कृतं लक्ष्यवर्णनम् ।
तच्चतुर्विधशृङ्गाररसमत्वेनोदिते इमे ॥
मध्यमारभटी चैव तथा मध्यमकैशिकी ।
मध्यमारभटी प्रौढेऽप्यर्थे नातिमृदुक्रमा ॥
जघान दानवान्क्रूरान्मांसशोणितभोजनान् ।
मृद्वर्थेऽप्यनतिप्रौढबन्धा मध्यमकैशिकी ।
तादृक्प्रिये कृतरुषं धिङ्मां धिङ्मम जीवितम् ॥ ६५ ॥
शृङ्गारे कैशिकी वीरे सात्वत्यारभटी पुनः ॥
रसे रौद्रे च बीभत्से वृत्तिः सर्वत्र भारती ।
कैशिकीं सात्वतीं चैव केचिदारभटीमपि ।
शब्दार्थवृत्तिं ब्रुवते भारतीं शब्दमात्रकाम् ॥

जलजनिजनिजायाप्रेमपाकेन गोपीजनमनसिजकेलीलम्पटे लम्पटेन ।
गुहपुरनिलयेन प्रोद्धृतः शुद्धविन्दुः सुरकुसुममरन्दे चारुचम्पूप्रबन्धे ॥

इति श्रीमद्घटिकाशतप्रतघण्टाविहिताष्टभाषासरसकविताचरणनिपुणस्य वासुदेवयोगीश्वरस्यान्तेवास्यन्यतमस्य गुहपुरवासशर्मणः कृष्णशर्मणः कवेः कृतौ मन्दारमरन्दे चम्पूप्रबन्धे शुद्धविन्दुरष्टमः समाप्तिमगमत् ।

---

रम्यविन्दुः ।

रम्यविन्दावत्र रसलक्षणानि ब्रुवे स्फुटम् ।
तत्रादौ कारणीभूतभावलक्षणमुच्यते ॥
रसानुकूलविकृतिर्भावः स द्विविधो मतः ।
आन्तरश्चैव शारीर इतीदं सर्वसंमतम् ॥
आन्तरस्तु द्विधा स्थायिव्यभिचारिविभेदतः ।
विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न यः ॥
आत्मभावं नयत्यन्यान्स्थायी यावद्रसस्थितिः ।
रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ॥
जुगुप्सा विस्मयश्चाष्टौ स्थायिभावा यथाक्रमम् ।
मनोऽनुकूलेष्वर्थेषु सुखसंवेदनं रतिः ॥
विलोकयति सा कान्तं सहर्षपुलकोद्गमम् ।
हासो विकृतवेषादिदर्शनान्मानसी क्रिया ।
विकटास्थिमयी माला वस्त्रं चर्माङ्गदं फणी ।
उचितोऽहं वरो गौर्यास्त्वादृश्या इति सस्मितः ॥ १ ।
शोकश्चित्तस्य वैधुर्यमभीष्टविरहादिभिः ॥
म्रियेत प्रियेण चेदेष किं करोतु स्तनंधयः ।
न चेदसह्यं वैधव्यमिति मोहमियाय सा ॥ २ ॥
प्रतिकूलेषु चित्तस्य वैरस्यं क्रोध उच्यते
कुठारोऽयं कठोरास्थिखण्डनोद्यत्त्वणा(?)कृतिः ।
मिथ्यालिङ्गानि पापानां यैर्वृथा मे हतः पिता ॥ ३ ॥
चित्तस्यास्थिरता सर्वकार्येषूत्साह इष्यते ॥

प्राचीनम्—

चापमानय सौमित्रे शरानाशीविषोपमान्।
समुद्रं शोषयिष्यामि पद्भ्यां यान्तु प्लवंगमाः॥ ४॥

भयं चित्तस्य वैक्लव्यं व्याघ्रादिजनितं मतम्।

घनगर्जितमाकर्ण्य विशन्तो गिरिकन्दरान्।
तेभ्यः प्रतिध्वनेर्भीता निवर्तन्ते मृगार्भकाः॥ ५॥

जुगुप्सा निन्दितज्ञानं दोषसंदर्शनादिभिः॥

इयं प्रोतकपालालीभूषणा रावभीषणा।
[सु]पीतो(नो)त्स(त्स्य)न्दिरक्तार्द्रस्तना तिष्ठति ताटका॥ ६॥

विस्मयश्चित्तविस्तारः पदार्थातिशयादिभिः।

युध्यन्तमर्जुनं वीक्ष्य के वा देवा न विस्मिताः।
न मेने बहु गोविन्दो दृष्टकर्णपराक्रमः॥ ७॥

आभिमुख्यात्तिरोभावाविर्भावाभ्यां चरन्ति ये॥
स्थायिभावेषु सत्स्वेव रसेषु व्यभिचारिणः।
निर्वेदग्लानिशङ्काश्च व्रीडासूयामदश्रमाः॥
आलस्यं दैन्यमावेगश्चिन्तामोहः स्मृतिर्धृतिः।
हर्षश्चपलता गर्वो जडतौत्सुक्यमुग्रता॥
विषादनिद्रापस्मारविबोधामर्षसुप्तयः।
अवहित्थोन्मादमतिमरणव्याधयस्तथा॥
त्रासो वितर्क इत्येव त्रयस्त्रिंशदमी मताः।
तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदो निष्फलत्वधीः॥
तत्रानुभावाश्चिन्ताश्रुवैवर्ण्यश्वासदीनताः।

फलं किमेतैः सखि मे भूषणैर्भोजनैरपि।
इत्युक्त्वाश्रु मुमोचासौ सनिश्वासं मृगेक्षणा॥ ८॥

रत्याद्यायासतृट्क्षुद्भिर्ग्लानिर्निर्बलता मता॥
अत्रानुभावा वैवर्ण्यकम्पानुत्साहवामताः।

धराधरादपि गुरुं वेत्ति सा मणिमुद्रिकाम् ।
रतिक्लिन्ना चकोराक्षी राधिका कृष्णकल्पिताम् ॥ ९ ॥

**अनर्थप्रतिभाशङ्का परक्रौर्यात्स्वदुर्नयात् ॥**
**अत्रानुभावाः कपटवीक्षाप्रच्छादनादयः ।**

जानात्यन्येति सा प्राणप्रियं कुन्तलमस्पृशत् ।
संकेतकालजिज्ञासालोलुपं वीक्ष्य राधिका ॥ १० ॥

**चेतःसंकोचनं व्रीडा दुराचारादिभिर्मता ॥**
**अत्रानुभावास्तु शिरोनत्यङ्गावरणादयः ।**

कृष्णप्रियेति सख्युक्तिं श्रुत्वा जाता नमन्मुखी ।

**असूया गर्वदौर्जन्यजान्योत्कर्षासहिष्णुता ॥**
**अत्रानुभावा दोषोक्त्यवज्ञाभ्रुकुटिमन्यवः ।**

वीक्ष्य प्रियान्वितामन्यां बालासीदरुणेक्षणा ॥ ११ ॥

**संमोहानन्दसंभेदो मदिरादिकृतो मदः ॥**
**अत्रानुभावा निद्रा च हसितं रोदनादयः ।**
**उत्तमानां मध्यमानामधमानां यथाक्रमम् ॥**

उल्लसन्नयनघूर्णनमीषद्भाषितस्खलनमञ्चितरोम ।
आदधौ पदमकारणहास्यं सुन्दरीहृदि मदो मदनो वा ॥ १२ ॥

**आयासः श्रम इत्युक्तो रताध्वगमनादिजः ।**
**अत्रानुभावाः कथिताः स्वेदनिश्चेष्टितादयः ॥**

प्राप्य मन्मथभरादतिवेगं दुर्वहस्तनभरा सुरतेषु ।
राधिका श्रमजलार्द्रनिटालश्लिष्टकेशमपतद्धृदि तस्य ॥ १३ ॥

**क्रियासु मान्द्यमालस्यं दुःखगर्भमदादिभिः ।**
**अत्रानुभावाः कथिता उपवेशनपूर्वकाः ॥**

प्राचीनम्—

चलति कथंचित्पृष्टा यच्छति वचनं कथंचिदालीभिः ।
आसितुमेव हि मनुते गुरुगर्भभरालसा सुतनुः ॥ १४ ॥

---

१. 'निचोल' इति भवेत्.

**सत्त्वत्यागादनौद्धत्यं दैन्यं कार्पण्यसंभवम्।**
**अत्रानुभावा मलिनाननतादय ईरिताः॥**

अबलाहननं न हि तव युक्तं सुमनः सुधर्मयुक्तस्य।
अपि मधुसूदनगुणवत आकलये ते नमः शतं भूयः॥ १५॥

**इष्टानभिगमादिभ्य आवेगो जातसंभ्रमः।**
**युक्तायुक्तविपर्यासादयश्चात्रानुभावकाः॥**

घनगर्जितमाकर्ण्य कन्दर्पाक्रान्तमानसा।
मानिन्यपि स्वयं सद्यो जगाम शठमन्दिरम्॥ १६॥

**आत्मेष्टवस्तुनोऽप्राप्त्या चिन्ता तद्ध्यानमीरितम्।**
**अत्रानुभावाः संतापबाष्पनिःश्वसितादयः॥**

कदा पश्यामि राधायाः कुण्डलद्वयमण्डितम्।
अधरीकृतराकेन्दुमण्डलं मुखमण्डलम्॥ १७॥

**मोहो विचित्तता भीतिदुःखावेगानुचिन्तनैः।**
**अनुभावा अत्र पातस्तम्भविस्मरणादयः॥**

प्राचीनम्—

कुशलं तस्या जीवति कुशलं पृच्छामि जीवतीत्युक्तम्।
पुनरपि तदेव कथयसि मृतां नु कथयामि या श्वसिति॥ १८॥

**स्मृतिः पूर्वानुभूतार्थज्ञानं सदृशदर्शनात्।**
**अत्रानुभावाः कथिता भ्रूसमुन्नयनादयः॥**

ससार राधिकां कृष्णो मालतीनवसंगमे।

**धृतिरानन्दथुस्तत्त्वज्ञानाभीष्टागमादिभिः।**
**अत्रानुभावा अव्यग्रसंभोगकरणादयः॥**

इयं सा राधिका लब्धा किमन्याभिः फलं मम।
इत्यव्यग्रमना गाढमालिलिङ्ग तदा हरिः॥ १९॥

**चेतःप्रसन्नता हर्षः स्यात्प्रेयोदर्शनादिभिः।**
**अत्रानुभावाः पुलकस्वेदबाष्पोद्भवादयः॥**

प्राचीनम्—
पुलकितकुचकुम्भपालि राधा व्रजति मुकुन्दमनङ्गकेलिलोला ।
विरचयति न मध्यभङ्गभीतिं गणयति नापि नितम्बगौरवाणि ॥ २० ॥

चापलं त्वनवस्थानं रागद्वेषादिसंभवम् ।
अत्रानुभावाः स्वच्छन्दाचारनिर्भर्त्सनादयः ॥

सुमितलताङ्गीकृतरतिरपि घनपुण्येषु लोलचित्तोऽयम् ।
कृष्णभुजङ्गः पश्य त्वामभिसमुपैति शीघ्रमित एहि ॥ २१ ॥

आत्मोत्कर्षोऽन्यधिकाराद्गर्वोऽभिजनतादिजः ।
अत्रानुभावा अन्येषामवज्ञाहसितादयः ॥

तुल्या मया किं सा धूर्त रूपाद्यैस्तव या प्रिया ।
इत्युक्त्वा सस्मितं राधा स्वाङ्गानि मुहुरीक्षते ॥ २२ ॥

जडताप्रतिपत्तिः स्यादिष्टानिष्टागमादिभिः ।
तूष्णींभावोऽत्र कथितः क्रियया वचसापि च ॥

प्रिये समागते तस्थौ क्षणं चित्रार्पितेव सा ।

कालाक्षमत्वमौत्सुक्यं रम्येच्छादिभिरीरितः (तम्) ।
श्वासोच्छ्वासत्वरागत्यादयश्चात्रानुभावकाः ॥

माधवप्रेषितामाराद्दूतिकां वीक्ष्य राधिका ।
समुत्तस्थौ सखीलोकलीलालोलापि सत्वरम् ॥ २३ ॥

दोषापराधदौर्जन्यादिभ्यो निर्दयतोग्रता ।
अत्र स्वेदशिरःकम्पतर्जनाताडनादयः ॥

जितोऽसि मन्दकन्दर्प त्वज्जेतास्ति हृदि प्रियः ।

प्रारब्धकार्यासिद्ध्यादेर्विषादश्चित्तभञ्जनम् ।
अत्रोत्तमानां हसनकारणान्वेषणादयः ॥
अनुभावा मध्यमानां विमनस्कत्वपूर्वकाः ।
अधमानां च निःश्वासमुखशोषादयो मताः ॥

गतं तेनैव मे चेतः किमत्र करवाण्यहम् ॥ २४ ॥

---

१. पुष्पितवल्लीकृतसुरतः.

बाह्येन्द्रियाणां वैकल्यं निद्रादुःखश्रमादिभिः ।
अत्राङ्गभङ्गस्वप्नाक्षिमीलनोज्जृम्भणादयः ॥
स्वप्ने दृष्ट्वा प्रियं बाहू प्रसारयति सा मुधा ।
ग्रहदुःखसुखावेशोऽपस्मारस्तु भयादिजः ।
कम्पस्वेदमहीपातलालाफेनोद्गमादयः ॥
कान्तानङ्गग्रहाविष्टमानसा मत्तकाशिनी ।
प्रम्लायति प्रलपति शेते शुष्यति लुण्ठति ॥ २५ ॥
विबोधश्चेतनावाप्तिर्निद्राछेदादिभिर्मता ।
अत्रानुभावा जृम्भाक्षिमर्दनादय ईरिताः ॥
चिरादुत्स्वप्नतां याता विद्धेवोन्मीलति क्षणम् ।
परगर्वशमाकाङ्क्षामर्षः स्यादवमानभूः ।
अत्र स्वेदशिरःकम्पनयनारुणतादयः ॥
याहि याहि प्रिया यत्र कदर्थयसि किं वृथा ॥ २६ ॥
निद्रासुखादिभिः सुप्तिरन्तरिन्द्रियमीलनम् ।
अत्राक्षिमीलनश्वासोच्छ्वासाद्या अनुभावकाः ॥
चिरं निद्राति निश्चिन्तं त्वदाश्लेषसुखादियम् ।
आकारगोपनं चावहित्थं लज्जादिसंभवम् ।
अन्यथाकरणप्रेक्षाकथनाच्छादनादयः ॥
शुकचञ्चूक्षतं बिम्बं पश्यात्रेति सखीवचः ।
स्वाधरं गोपयामास श्रुत्वा चैलेन राधिका ॥ २७ ॥
विना विचारमाचार उन्मादः शोकहर्षजः ।
अत्रानुभावाश्च वृथाहासरोदनपूर्वकाः ॥
आगतेयं प्रियतमेत्यालिङ्गति लतामसौ ।
विमृश्य युक्तिभिः शश्वदर्थनिर्धारणं मतिः ।
अत्रानुभावा भ्रूक्षेपकरचालनपूर्वकाः ॥
न राजीवं निशोन्निद्रमकलङ्की न चन्द्रमाः ।
किं भवेत्तर्हि तादृश्याः सर्वथा राधिकाननम् ॥ २८ ॥

मरणं त्वात्मनो देहेऽप्यनास्था दुःखसंभवा ।
अत्रानुभावाः कथितास्तूर्णींभावादयो बुधैः ॥
चन्द्रमुद्वीक्ष्य(क्ष)ते तूर्ष्णीं बाला जीवितनिःस्पृहा ।
व्याधिः शरीरसंतापो विरहादिकृतो मतः ।
अनुभावा अङ्गपातलुण्ठनादय ईरिताः ॥
नश्येत्तस्यास्तर्हि तापो यद्यौर्वो हिमशीतलः ॥ २९ ॥
त्रासश्चित्तस्य संक्षोभ आकस्मिकभयादिभिः ।
अत्रानुभावा रोमाञ्चगात्रगौरवपूर्वकाः ॥
मानिनी स्तनितं श्रुत्वा गाढमालिङ्गति प्रियम् ।
विकल्पः कल्पनानन्त्यं संदेहादिभिरीरितः ।
अनुभावा शिरःकम्पभ्रूङ्गुलीचलनादयः ॥
प्रेषयामि सखीं यद्वा स्वयं यामि तदन्तिकम् ॥ ३० ॥
शारीरोऽपि द्विधा सात्त्विकानुभावविभेदतः ।
स्वपरान्यतरप्राप्तसुखदुःखादिभावनाम् (?) ॥
लब्धं यदन्तःकरणं सत्त्वं तद्वृत्तया तथा ।
अयत्नजो देहधर्मः सात्त्विको भाव उच्यते ॥
स्तम्भप्रलयरोमाञ्चाः स्वरभङ्गोऽश्रुवेपथुः ।
स्वेदो वैवर्ण्यमित्यष्टविधः स कथितो बुधैः ॥
हर्षदुःखभयादिभ्यः स्तम्भो गतिनिरोधनम् ।
वीक्ष्य कान्तं प्रिया गन्तुं यतमानापि नाशकत् ।
चेष्टानिरोधः प्रलयः सुखदुःखादिसंभवः ॥
राधिका कृष्णमालोक्य मग्ना मोहमहार्णवे ॥ ३१ ॥
रोमाञ्चः पुलकोद्भेदः प्रियसंदर्शनादिभिः ।
पुलकैरुत्किरत्यन्तःकामो बाणान्प्रियागमे ।
स्वरभङ्गः क्रोधहर्षादिभ्यो गद्गदभाषणम् ॥
व्यक्तिः स्यात्स्वरभेदस्य कोपादुक्तिः क्रियेत चेत् ॥ ३२ ॥

इत्यादधाति सा मौनं प्रिये प्राप्ते कृतागसि ।
अश्रु नेत्रोद्भवं वारि दुःखहर्षादिसंभवम् ।
हृदयं धावति प्राप्तमश्रु कान्तं निवेदितुम् ॥ ३३ ॥
रागभीत्यादिजनितं वेपथुर्गात्रकम्पनम् ॥
लतिकेव चकम्पे सा यामीति प्रेयसोदिता ।
हर्षशोकभयादिभ्यः स्वेदस्त्वङ्गाज्जलोद्गमः ।
स्मरराज्याभिषिक्तेव स्विन्नाङ्गी राधिका बभौ ॥ ३४ ॥
वैवर्ण्यमन्यवर्णत्वं रागदुःखभयादिभिः ॥
कुक्कुटे कुर्वति क्वाणमाननं श्लिष्टयोस्तयोः ।
दिवाकरकराक्रान्तशशिकान्तमिवाभवत् ॥ ३५ ॥
अथो रसाननुभवगोचरत्वं नयन्ति ये ।
प्रयत्नजा देहधर्मा अनुभावाश्च ते मताः ॥
अनुभावा द्विधा प्रोक्ताः शुद्धाभिनयभेदतः ।
तत्रानारोपिताः शुद्धा अन्त्या आरोपिता नटे ॥
द्विविधाः स्युः पुनर्द्वेधा वाचिकाङ्गिकभेदतः ।
वाग्व्यापारो वाचिकः स्यादङ्गव्यापार आङ्गिकः ॥
स्मितं नेत्रप्रसादश्च प्रमोदो मधुरं वचः ।
कटाक्षश्च भुजाक्षेपो धृतिरास्यप्रसन्नता ॥
इत्याद्यङ्गविकाराः स्युः शृङ्गारे त्वनुभावकाः ।
कुञ्चनं वेषवाक्याङ्गविकारा ओष्ठचालनम् ॥
कपोलनासास्पन्दाद्या हास्ये स्युरनुभावकाः ।
निःश्वासवचनं मोहः संतापः परिदेवनम् ।
देहाभिघातरुदितदाहाद्याः करुणे रसे ।
नानाप्रहारभ्रुकुटीकराग्रपरिपेषणम् ॥
दन्तोष्ठपीडनशिरःकम्पाद्या रौद्र ईरिताः ।
पराक्रमोत्साहशौर्यवीर्यधैर्यप्रधानकाः ॥

आक्षेपादियुता वाचो रसे वीरेऽनुभावकाः ।
रोमाञ्चस्वरभेदाङ्गिकरनेत्रादिकम्पनम् ॥
शुष्कोष्ठतालुकण्ठाद्या अनुभावा भयानके ।
नेत्रास्यघूर्णनं नासामुखाक्ष्याच्छादनानि च ॥
निष्ठीवनाद्या वीभत्से अनुभावा रसे मताः ।
हाहाकारः साधुवादः कम्पो गद्गदभाषणम् ॥
निर्निमेषप्रेषणाद्या अनुभावाः स्युरद्भुते ।
विभावस्तु ज्ञायमानरसोत्पादनकारणम् ॥
स विभावो द्विधा चालम्बनोद्दीपनभेदतः ।
आलम्बनविभावस्तु यमालम्ब्याभिजायते ॥
कार्यं स स्याद्द्वितीयस्तु निमित्तं कारणं मतम् ।
उद्दीपनविभावोऽपि प्रोक्तः प्राज्ञैश्चतुर्विधः ॥
आलम्बनालंकरणं तच्चेष्टा तद्गुणास्तथा ।
तटस्थश्चेति तत्सर्वं निर्दिशामि क्रमादिह ॥
आलम्बनविभावास्तु नायकादय ईरिताः ।
आलम्बनालंकरणं हारनूपुरपूर्वकम् ॥
तथालम्बनचेष्टास्तु हावभावादयो मताः ।
आलम्बनगुणाश्चापि रूपयौवनपूर्वकाः ॥
तटस्थाः शीतकिरणमलयानिलपूर्वकाः ।
माल्यालंकारर्तुगानकाव्यसेवासुधाकराः ॥
चन्दनोद्यानगत्याद्याः शृङ्गारोद्दीपका मताः ।
विकृतालंकारवेषाचारव्याहारपूर्वकाः ॥
उद्दीपनविभावास्तु रसे हास्ये प्रकीर्तिताः ।
शापेष्टनाशदारिद्र्यबन्धनव्यसनादयः ॥
उद्दीपनविभावास्तु कथिताः करुणे रसे ।
संग्रामायुधखड्गाभिभवार्युदितदुर्गिरः ॥

भेदनिर्भर्त्सनाद्याः स्यू रौद्रे तूद्दीपका रसे।
व्यवसायोत्साहमोहा विषादा विस्मयादयः॥
उद्दीपका रसे वीरे विभावाः कथिता बुधैः।
श्मशानारण्यसंग्राममहासत्त्वादिदर्शनम्॥
दुःस्वरश्रवणक्ष्मापापराधाद्या भयानके।
बीभत्से चानभिमतगन्धस्पर्शरसेक्षणम्॥
अहृद्यश्रवणस्मृत्यादय उद्दीपका मताः।
शिल्पमायाकर्मरूपातिशयवचांसि च॥
इन्द्रजालादयः प्रोक्ता अद्भुतोद्दीपका बुधैः।
अनुभावविभावानां नोदाहरणमीरितम्॥
सुगमत्वात्तथैतेषां ग्रन्थगौरवभीतितः।
व्यभिचारिविभावानुभावैर्भावैश्च सात्त्विकैः॥
एतैः समुल्लासितोऽयं भावः स्थायी रसो मतः।
अनुभावविभावाद्यैर्यत्र चित्तस्य विश्रमः॥
रसं तं ब्रुवतेऽन्येऽन्ये प्रबुद्धस्थायिवासनाम्।
अलौकिको लौकिकश्चेत्येवं स द्विविधो रसः॥
आत्मचेतःसंनिकर्षमात्रजातस्त्वलौकिकः।
बहिः स्वसंनिकर्षेभ्यः स्यादुद्भूतस्तु लौकिकः॥
शृङ्गारहास्यकरुणरौद्रवीरभयानकाः।
बीभत्सोऽद्भुत इत्यष्टविधः स्यादुभयो रसः॥
रसोऽपि नवमः शान्तः शमस्थायीति केचन।
अन्ये तु करुणास्थायी वात्सल्यं दशमोऽपि च॥
रसस्य तत्र नित्यत्वान्न शान्तिर्नोदयोऽपि च।
अनित्यत्वात्तु भावानामस्ति शान्तिस्तथोदयः॥
रसस्य संधिशाबल्ये न केनापि प्रकीर्तिते।
भावानां संधिशाबल्ये सर्वैः कविभिरीरिते॥

अभिलाषाद्यात्मकत्वाद्रत्यादिस्थायिनां पुनः ।
अतो न रसतैतेषामानन्दात्मा यतो रसः ॥
यूनोः परस्परं पूर्णः प्रमोदः शुचिरुच्यते ।
दैवतं विष्णुरेवास्य वर्णः श्यामः प्रकीर्तितः ॥
संभोगविप्रलम्भाभ्यां शृङ्गारो द्विविधो मतः ।
संभोगः स्याच्चुम्बनादिभेदाद्यद्यप्यनेकधा ॥
तथापि कामिनीकान्तारब्धभेदा द्विधा मतः ।
यथा यथा किरत्येषा कटाक्षविशिखान्प्रिये ।
तथा तथा वहत्येष सान्द्ररोमाञ्चकञ्चुकम् ॥ ३६ ॥
यूनोरन्योन्यमुदितेन्द्रियसंबन्धवर्जनम् ॥
स्याद्विप्रलम्भः शृङ्गारः कथितः स तु पञ्चधा ।
शापप्रवासाभिलाषेर्ष्यावियोगजभेदतः ॥
मुन्यादिकोपजोऽश्लेषो विप्रलम्भस्तु शापजः ।
कुन्तीमलंकृतां पश्यन्मृगयां विव्यथे स्मरन् ।
प्रवासजो विप्रलम्भः प्रिये देशान्तरोन्मुखे ॥
प्रयाणोद्युक्तकान्तस्य श्रुतिं वृत्तं गतं तदा ।
प्रमोदेनाश्रुणा तस्याः सार्धं धैर्येण निःसृतम् ॥ ३७ ॥
प्रागसंगतयोर्यूनोरनुरागेऽपि जाग्रति ।
अयोगः पारतन्त्र्याद्यैर्विप्रलम्भोऽभिलाषजः ॥
कटाक्षान्किरतोरादौ साकूतं हसतोस्ततः ।
अयने मेलने दैवाद्यदासीत्तत्कथं ब्रुवे ॥ ३८ ॥
ईर्ष्यासंभूतस्तु मानाद्विश्लेषः सागसि प्रिये ।
धन्याहं त्वत्प्रिया नाम प्रापितास्मि शठाद्य यत् ।
यूनोः कुतोऽपि विश्लेषो युक्तयोश्च वियोगजः ॥
नास्ति किं तत्र चन्द्रोऽयं यन्नाद्यापि समागतः ॥ ३९ ॥
अथ शृङ्गाराङ्कुरादिहेत्ववस्था दश ब्रुवे ।
चक्षुःप्रीतिर्मनःसङ्गः संकल्पश्च प्रजागरः ॥

अरतिः संज्वरः कार्श्यं लज्जात्यागो भ्रमस्तथा ।
ततश्चात्मजिहासा स्युरित्यनङ्गदशा दश ॥
चक्षुःप्रीतिस्तु कथिता तदेकालोकने रतिः ।
पश्यन्त्यनिमिषं कान्तमासीच्चित्रार्पितेव सा ।
मनःसङ्गस्तु मनसस्तदेकासक्तता सदा ॥
कुचसंघर्षणाध्यस्तमथ वा बद्धमेतया ।
लावण्याम्भसि मग्नं वा गतं नायाति मे मनः ॥ ४० ॥
संततं तद्गतां चिन्तां संकल्पं ब्रुवते बुधाः ।
दुर्लभो वल्लभो नूनं रागोऽपि मम कोऽप्यसौ ।
नेक्षे दूतीं च निपुणां न जाने भवितव्यताम् ॥ ४१ ॥
प्रजागरस्तु चिन्ताभिर्निद्राक्षतिरहर्निशम् ॥
अविनिद्रं सदाम्भोजशोभामेति तदीक्षणम् ।
अरतिस्तु भवेद्द्वेषो हृद्येष्वपि च वस्तुषु ।
चन्द्रं कलयते राधा चक्रवाकीव पावकम् ॥ ४२ ॥
संज्वरस्तनुसंतापभरः स्मरशरोद्भवः ॥
तप्तलोहीयति जलं बालाकरतलं गतम् ।
कार्श्यं तु स्मरसंतापविहिता तनुता तनोः ।
ऊर्मिकां कंकणं तच्च त(म)नुते गदमद्य सा ॥ ४३ ॥
लज्जात्यागस्तु कन्दर्पसंतापेन क्ष(त्र)पाक्षतिः ॥
उल्लङ्घ्य मानिनीधर्मं भणितं राधया तया ।
भ्रमः स्यादयथाज्ञानं चेतनाचेतनेष्वपि ।
सखीमुखं समालोक्य त्वमित्याभाषते प्रिया ॥ ४४ ॥
आत्मत्यागोद्यमस्त्वात्मजिहासा परिकीर्तिता ॥
प्रविश्य चन्द्रिकाज्वालां पश्यन्तीन्दुं निजास्पृहा ।
प्रलापोन्मादमोहानप्याहुः केचन तद्दशाः ।
प्रलापो दयिताश्लिष्टगुणालापो मुहुर्मुहुः

तथा मृदुस्तथा रागी चतुरः सुन्दरस्तथा ।
मानवत्यपि कान्ता द्राक्स्वयमेव यथा व्रजेत् ॥ ४५ ॥

उन्मादमोहावाराल्प्रागत्रैव कथितौ मया ।
आहुरेता दशाः केचिच्छृङ्गारे त्वभिलाषजे ।
केचिदाहुर्विप्रलम्भसामान्येऽपि दशा इमाः ॥ ४६ ॥

हासस्य परिपोषस्तु रसो हास्यः प्रकीर्तितः ॥
वर्णोऽस्य शुक्लो देवस्तु सिन्धुरानन ईरितः ।
हास्यस्य देवतां केचिद्ब्रुवन्ति रजनीकरम् ॥
स्वनिष्ठः परनिष्ठश्चेत्यादौ स द्विविधो मतः ।
स द्वेधापि त्रिधा ज्येष्ठमध्यमाधमभेदतः ॥
उत्तमानां स्मितं प्रोक्तं मध्यानां हसितं मतम् ।
प्रोक्तं तयातिहसितमधमानां कवीश्वरैः ॥
स्वीयहासपरीपोषो विकृतस्वक्रियादिभिः ।
यः स स्वनिष्ठो हास्यः स्याद्रस इत्युदितो बुधैः ॥

प्राचीनम्—

लेखिनीमित इतो विलोकयन्कुत्र कुत्र न जगाम पद्मभूः ।
तां पुनः श्रवणसीमसंगतां प्राप्य नम्रवदनः स्मितं दधौ ॥ ४७ ॥

अन्यहासपरीपोषो विकृतान्यक्रियादिभिः ।
परनिष्ठो हास्य इति प्रोक्तः स रसकोविदैः ॥
मन्दगं वस्त्रमुद्धृत्य मघवन्मणिकुट्टिमे ।
ततोऽम्भःपतितं वीक्ष्य जहसुर्द्रौपदीमुखाः ।
अन्येषां सुगमत्वाच्च दिङ्मात्रमिति कीर्तितम् ॥ ४८ ॥

अनिष्टाप्तीष्टनाशाभ्यां करुणः शोकपोषणम् ।
केचिदाशाच्छेदजन्येन्द्रियग्लानिं च तं विदुः ॥
वर्णः कपोतचित्रं स्याद्देवता वरुणो मतः ।
स्वनिष्ठः परनिष्ठश्चेति द्विधा करुणो रसः ॥

स्वनिष्ठः करुणः स्वस्य स्वेष्टनाशादिसंभवः ।

प्राचीनम्—

कृतवानसि विप्रियं न मे प्रतिकूलं न च ते मया कृतम् ।
किमकारणमेव दर्शनं विलपन्त्यै रतये न दीयते ॥ ४९ ॥

परनिष्ठः परानिष्टप्राप्त्यादिजनितो मतः ॥

प्राचीनम्—

अथ तैः परिदेविताक्षरैर्हृदये दिग्धशरैरिवार्दितः ।
रतिमभ्युपपत्तुमातुरां मधुरात्मानमदर्शयत्पुरः ॥ ५० ॥

सर्वेन्द्रियाणामौद्धत्यं यद्वा मात्सर्यपूर्वकैः ।
क्रोधस्य च परीपोषौ रसो रौद्रः प्रकीर्तितः ॥
वर्णो रक्तस्तु रौद्रस्य देवता रुद्र ईरितः ।

प्राचीनम्—

अद्य मिथ्याप्रतिज्ञोऽसौ किरीटी क्रियते मया ।
शस्त्रं गृहाण वा नो चेन्मौलावारचयाञ्जलिम् ॥ ५१ ॥

सर्वेन्द्रियप्रहर्षस्तु रसो वीरः स तु त्रिधा ॥
दानवीरदयावीरयुद्धवीरविभेदतः ।
वर्णो गौरो देवता तु त्रिलोकेशः शचीपतिः ॥
दानवीरो मतो दानाध्यवसायादिसंभवः ।

इन्द्राय श्येनरूपाय शिबिर्मांसानि दत्तवान् ।
तस्मै ब्राह्मणरूपाय न दद्यां चर्मवर्म किम् ॥ ५२ ॥

आर्द्रताध्यवसायादेर्दयावीरस्तु संभवः ॥

प्राचीनम्—

अयि विहंगवराक कपोतकं विसृज धेहि धृतिं मम मेदसा ।
शिबिरहं विदितो भवता न किं सकलसत्त्वसमुद्धरणक्षमः ॥ ५३ ॥

प्रतापाध्यवसायादिजोत्सवो युद्धवीरकः ।

संग्रामसंगते रामे दृष्टिश्चापं करः शरम् ।
सर्वाङ्गं पुलकं चित्तं धृतिर्धावति सत्वरम् ॥ ५४ ॥

सर्वेन्द्रियाणां विक्षोभः परिपोषो भयस्य वा ॥
भयानकः स तु द्वेधा स्वान्यनिष्ठविभेदतः ।
भयानकस्य वर्णस्तु श्यामो देवो यमो मतः ॥
स्वापराधादिसंभूतः स्वनिष्ठः स्याद्भयानकः ।

गोपीगृहेषु कृतमाग उदीक्ष्य माता
मां ताडयत्यतिरुषेति गृहीतशङ्कः ।
वेषं पुपोष कपटज्वरजर्जराङ्गं
निःश्वासकम्पबहुलं किल नन्दसूनुः ॥ ५५ ॥

परकीयविभावैश्च परनिष्ठः परस्य चेत् ॥

वृकोदराननादाजौ सिंहनादे विनिर्गते ।
केचिद्भुवं गताः केचित्कम्पिता दुद्रुवुः परे ॥ ५६ ॥

जुगुप्सायाः परीपोषो यद्वा हृद्येक्षणादिभिः ।
सर्वेन्द्रियाणां संकोचो रसो बीभत्स ईरितः ॥
वर्णो नीलो देवता तु महाकाल उदाहृतः ।
स्वनिष्ठः परनिष्ठश्चेत्येव सोऽपि द्विधा मतः ॥
स्वनिष्ठः स्वकृतस्पर्शादिभ्यः स्वस्य भवेद्यदि ।

मन्दोदरीं समाधातुं व्रजन्रामो रणक्षितौ ।
ताहृङ्मज्जादिकं दृष्ट्वा निष्ठीवति विकुञ्चति ॥ ५७ ॥

परनिष्ठः पराहृद्यस्पर्शादिश्रवणादिजः ॥

विष्ठाकूपे निमग्नोऽयमिति निष्ठीवति स्मरन् ।

विस्मयस्य परीपोषो रसः प्रोक्तोऽद्भुतो बुधैः ।
वर्णः पीतो देवता तु परमेष्ठी प्रकीर्तितः ॥
श्यामवर्णं त्वद्भुतस्य केचिदूचुर्विपश्चितः ।
स्वान्यनिष्ठविभेदेन सोऽद्भुतोऽपि द्विधा मतः ॥
स्वनिष्ठः स्वस्य संभूतः स्वकर्मातिशयादिभिः ।

सदान्तःपुरगा राधा तादृश्यपि कुलाङ्गना ।
कथं वशं मया नीतेत्यायया विस्मयं स्मरन् ॥ ५८ ॥

परनिष्ठोऽद्भुतोऽन्यस्य परकर्मादिसंभवः ॥
आनने वीक्ष्य कृष्णस्य ब्रह्माण्डं विस्मिताभवत् ।
केचिदाहुः प्रवृत्तिं च निवृत्तिं च फलद्वयम् ।
माया रसः प्रवृत्तौ तु निवृत्तौ शान्त इष्यते ॥
मायारसस्य भावस्तु स्थायी मिथ्यामतिर्मता ।
विभावा भुक्तिभोगाद्या अनुभावाः सुतादयः ॥
हर्षगर्वमदाद्याः स्युर्मायायां व्यभिचारिणः ।
मिथ्यामतिपरीपोषो मायारस इतीष्यते ॥
यदि रामा यदि च रमा तनयो विनयोदयोपेतः ।
यदि तनये तनयश्चेत्परलोकेऽस्मात्किमाधिक्यम् ॥ ५९ ॥
शमस्य परिपोषस्तु रसः शान्त उदाहृतः ।
अनुभावास्तु मोक्षाद्या विभावा ज्ञानपूर्वकाः ॥
ग्लानिश्रमविषादाद्याः शान्ते स्युर्व्यभिचारिणः ।
हेयं हर्म्यं धनं देयं पेयं तीर्थजलं पदम् ।
ध्येयं गेयं हरेर्वृत्तं मग्नेनासारसंसृतौ ॥ ६० ॥
व्रीडोन्मादमदावेगविषादौत्सुक्यविस्मयाः ॥
शङ्कासूया भयं ग्लानिर्निद्रा व्याधिः स्मृतिर्धृतिः ।
चिन्तावहित्था मरणं चापलं जडतापि च ॥
इत्येव विंशतिर्भावाः शृङ्गारे व्यभिचारिणः ।
केचिदूचुश्च सकलाः शृङ्गारे व्यभिचारिणः ॥
शङ्कासूया चपलता निद्रा स्वप्नः श्रमस्तथा ।
अवहित्था ग्लानिरिति हास्ये स्युर्व्यभिचारिणः ॥
दैन्यं ग्लानिर्व्याधिचिन्ते निर्वेदो जडता स्मृतिः ।
रसे भावाः प्रयोक्तव्याः करुणे व्यभिचारिणः ॥
हर्षासूयोत्साहगर्वमदाश्चपलतोग्रता ।
रसे रौद्रे प्रयोक्तव्यास्ते भावा व्यभिचारिणः ॥

वितर्कामर्षसंमोहक्रोधासूयामदोग्रताः ।
गर्वो विबोध आवेगो वीरे हर्षस्तथा धृतिः ॥
भयानके ग्लानिदैन्ये त्रासश्च मरणं तथा ।
बीभत्से तु विषादश्चोत्साहो व्याधिर्भयं मदः ॥
अपस्मारश्च मरणमिति स्युर्व्यभिचारिणः ।
अद्भुते जडतावेगमोहहर्षास्तथा धृतिः ॥
शृङ्गाराद्धास्यसंभूती रौद्राच्च करुणो भवेत् ।
वीरात्स्यादद्भुतोत्पत्तिर्बीभत्साच्च भयानकः ॥
अन्योन्यं हास्यकरुणौ तथा वीरभयानकौ ।
रौद्राद्भुतौ च शृङ्गारबीभत्सौ शत्रुरूपिणौ ॥
रसाभासस्तु रत्यादेरनौचित्यप्रवर्तने ।
स्मृत्वा दंदह्यते चेतो दृशाप्यस्पृशतीं सतीम् ।
भावाभासस्तु भावानामनौचित्यप्रवर्तने ॥
कटाक्षयति सा बाला पुरा या मां निराकरोत् ॥ ६१ ॥
भावशान्तिस्त्वभिव्यक्ते प्रशमे व्यभिचारिणाम् ।
विमते विनते तस्य दृक्कोणं शोणिमात्यजत् ।
अथ भोजनृपादीनां मतमत्र प्रकाश्यते ॥
रसो वै स इति श्रुत्या रस एकः प्रकीर्तितः ।
अतो रसः स्याच्छृङ्गार एक एवेतरे तु न ॥
धर्मार्थकाममोक्षाख्यभेदेन स चतुर्विधः ।
कथितो धर्मशृङ्गारे धीरोदात्तस्तु नायकः ॥
स्वकीया नायिका प्रोक्ता भारती वृत्तिरिष्यते ।
पौरस्त्या तु प्रवृत्तिः स्यात्पाञ्चाली रीतिरिष्यते ॥
कथितश्चार्थशृङ्गारे स धीरोद्धतनायकः ।
सर्वाश्च नायिकास्तत्र प्रवृत्तिर्मागधी मता ॥
वृत्तिरारभटी ज्ञेया गौडी रीतिः प्रकीर्तिता ।
नायकः कामशृङ्गारे स धीरललितो मतः ॥

सर्वाश्च नायिकास्तत्र प्रवृत्तिर्दाक्षिणात्यजा ।
वृत्तिस्तु कैशिकी ज्ञेया वैदर्भी रीतिरिष्यते ॥
कथितो मोक्षशृङ्गारे धीरशान्तस्तु नायकः ।
स्वकीया नायिका लाटी रीतिर्वृत्तिस्तु सात्वती ॥
अवन्त्या तु प्रवृत्तिः स्यादथोदाहरणक्रमः ।
धरामपालयद्धर्माद्राजा धार्मिकशेखरः ।
सपत्नान्दुर्जयाञ्जित्वा तद्राज्यमहरद्बलात् ॥ ६२ ॥
तथा तथानुरक्तोऽभूत्सा पश्यति यथा यथा ।
जजाप राम रामेति भ्रामयन्नक्षमालिकाम् ॥ ६३ ॥
अथ रीतिप्रवृत्तीनां ब्रूमहे लक्षणान्यपि ।
रीतिः प्रोक्ता गुणाश्लिष्टपदसंघटना बुधैः ॥
वैदर्भी लाटिका गौडी पाञ्चालीति चतुर्विधा ।
बन्धा पारुष्यरहिता शब्दकाठिण्य(न्य)वर्जिता ॥
नातिदीर्घसमासा च वैदर्भी रीतिरिष्यते ।
कुन्दचन्दनमन्दारैः समा चन्द्रांशुसंचयैः ।
कीर्तिस्ते गोपकान्तानां संततं कान्त राजते ॥ ६४ ॥
शान्तार्णबहुला दीर्घसमासा लाटिका मता ॥
लसतां पदपद्मे ते राम राम सदा हृदि ।
ओजःकान्तिगुणोपेता गौडी रीतिरितीर्यते ।
एष दुर्वारदोर्वीर्यशर्वरीचरगर्वहा ॥ ६५ ॥
पाञ्चाली चापि वैदर्भी गौडी रीत्युभयात्मिका ॥
राजा विराजते सोऽयमर्थिसार्थेप्सितार्थदः ।
प्रवर्तनं प्रवृत्तिः स्यादतिप्रेम्णार्जनादिषु ।
पौरस्त्या च तथावन्त्या मागधी दाक्षिणात्यजा ॥
एवं चतुर्विधा प्रोक्ता प्रवृत्तिः सा तु कोविदैः ।
प्रवर्तनं स्यात्पौरस्त्या धर्मकीर्त्यार्जनादिषु ॥
अस्थिरासारसंसारे धर्मकीर्तिद्वयं स्थिरम् ॥ ६६ ॥

अवन्त्या तु प्रवृत्तिः स्यात्सदा निर्वाणकाङ्क्षया ।
सदास्तु ते पदध्यानं किं मे स्वर्गसुखादिभिः ।
अर्थार्जनप्रवृत्तिस्तु प्रवृत्तिर्मागधी मता ॥
क्षणाद्राज्यं हरिष्यामि निगृह्य रिपुसंचयम् ।
भोगार्जनप्रवृत्तिस्तु प्रवृत्तिर्दाक्षिणात्यजा ।
प्रियागमनवेलेयं शय्यां कल्पय दूतिके ॥ ६७ ॥
वर्गेष्वाद्यतृतीयाश्च यवलाश्चातिकोमलाः ॥
घनौ रमौ शसौ हश्च वर्णाः शान्ताः प्रकीर्तिताः ।
शेषाष्टवर्गः सर्वोऽपि परुषाः परिकीर्तिताः ॥
परुषा अन्यसंयुक्ता अतिप्रौढा भवन्ति हि ।
कोमला अन्यसंयुक्ता यान्तीषत्सुकुमारताम् ॥
असंलक्ष्यक्रमं व्यङ्ग्यं सप्रपञ्चं निरूपितम् ।
तुष्यन्तु परिगृह्णन्तु निर्मत्सरतया बुधाः ॥

जलजनिजनिजायाप्रेमपाकेन गोपीजनमनसिजकेलीलम्पटेऽलंपटेन ।
गुहपुरनिलयेन प्रोद्धृतो रम्यबिन्दुः सुरकुसुममरन्दे चारुचम्पूप्रबन्धे ॥

इति श्रीमद्घटिकाशतशतघण्टाविहिताष्टभाषासरसकविताचरणनिपुणस्य वासुदेवयोगीश्वरस्यान्तेवास्यन्यतमस्य गुहपुरवासशर्मणः कृष्णशर्मणः कवेः कृतौ मन्दारमरन्दे चम्पूप्रबन्धे रम्यबिन्दुर्नवमः समाप्तिमगमत् ।

---

व्यङ्ग्यबिन्दुः।

व्यङ्ग्यबिन्दावलंकारध्वनिलक्षणलक्ष्ययोः ।
ब्रूमहे बालबोधाय तोषाय विदुषामपि ॥
अलंकरोति शब्दार्थावित्यलंकार इष्यते ।
द्विधा शब्दार्थभेदेन शब्दालंकृतयस्तु षट् ॥
छेको वृत्तिस्तथा लाटोऽनुप्रासपदपूर्वगाः ।
पुनरुक्तवदाभासो यमकं चित्रमित्यपि ॥
क्रमात्सजातीयवर्णद्वयस्यावर्तनं यदि ।
व्यवधानं विना तत्र च्छेकानुप्रास इष्यते ॥

सजातीयाव्यवहितवर्णा द्वित्रादयो यदि ।
आवर्तन्ते तदा केचिच्छेकानुप्रासमूचिरे ॥
कुंजगामाजगामाजाराधिका राधिकापि याम् ।
राजराजन्मुखः कामरामो रामोत्सवो गतः ॥ १ ॥
एकद्विप्रभृतीनां तु व्यञ्जनानां यदा भवेत् ।
आवृत्तिरनियत्यात्र वृत्त्यनुप्रास इष्यते ॥
कुञ्जे गुञ्जद्भृङ्गपुञ्जे मञ्जुमञ्जीरशिञ्जितम् ।
कुञ्जेषु केलौ संजातं मञ्जुलाक्ष्या न लक्ष्यते ॥ २ ॥
तात्पर्यभेदवद्यत्र भवेच्छब्दार्थयोर्द्वयोः ।
पौनरुक्त्यं तत्र लाटानुप्रासं परिचक्षते ॥
चातुरी चातुरी सैव या श्रिता राधिका विटम् ।
शब्दे भिन्नेऽपि यत्रार्थः पुनरुक्तवदश्चति ।
पुनरुक्तवदाभासोऽलंकारस्तत्र कथ्यते ॥
अर्थालंकारमेनं तु केचिदूचुर्विपश्चितः ।
महादेवं शिवं कृष्णं माधवं प्रणमत्यसौ ॥ ३ ॥
लक्षणं चित्रविन्दौ तु प्रोक्तं यमकचित्रयोः ॥
अथात्रार्थालंकृतीनां लक्षणोदाहृती ब्रुवे ।
उपमानन्वयो भ्रान्तिः प्रतीपं रूपकं स्मृतिः ॥
उपमेयोपमोल्लेखः परिणामस्त्वपह्नुतिः ।
उत्प्रेक्षातिशयोक्तिश्च संदेहस्तुल्ययोगिता ॥
प्रतिवस्तूपमा चैव दीपकावृत्तिदीपके ।
दृष्टान्तो व्यतिरेकश्च सहोक्तिश्च निदर्शना ॥
विनोक्तिश्च स सोक्तिः श्लेषः परिकराङ्कुरः ।
अप्रस्तुतप्रशंसा पर्यायोक्तं परीकरः ॥
व्याजस्तुतिर्व्याज न्दाथाक्षेपः प्रस्तुताङ्कुरः ।
विरोधाभासविष विशेषोक्तिरसंभवः ॥

विभावनासंगतिश्च विचित्रमधिकं समम् ।
व्याघातोऽल्पं विशेषश्चान्योन्यं कारणमालिका ॥
एकावली यथासंख्यं मालादीपकमप्युत ।
पर्यायः परिवृत्तिश्च परिसंख्या समुच्चयः ॥
विकल्पश्च समाधिश्च सारः कारकदीपकम् ।
काव्यार्थापत्तिरुल्लासः प्रत्यनीकं विकस्वरः ॥
मिथ्याध्यवसितिः काव्यलिङ्गं संभावना तथा ।
अवज्ञार्थान्तरन्यासः प्रौढोक्तिर्ललितं तथा ॥
अनुज्ञोदात्तलेशौ च प्रहर्षणविषादने ।
मुद्रा रत्नावली पूर्वरूपं तद्गुणमीलिते ॥
अतद्गुणश्चानुगुणः सामान्यं पिहितं यथा ।
उन्मीलितोत्तरे सूक्ष्मं विशेषो भाविकं तथा ॥
व्याजोक्तिर्विवृतोक्तिश्च गूढोक्तिर्युक्तिरेव च ।
छेकोक्तिश्चैव लोकोक्तिः स्वभावोक्तिस्ततः परम् ॥
वक्रोक्तिश्च तथा चित्रं प्रतिषेधो विधिस्तथा ।
निरुक्तिर्हेतुरित्येवमलंकारशतं मतम् ॥
रसवान्प्रेय ऊर्जस्वित्समाहितमतः परम् ।
भावोदयो भावसंधिर्भावशावल्यमप्यथ ॥
प्रत्यक्षमनुमानं चोपमानं शब्द एव च ।
अर्थापत्तिरनुपलब्धिरैतिह्यं संभवस्तथा ॥
इत्थं पुनः पञ्चदशालंकाराः कथिता बुधैः ।
संसृष्टिः संकरश्चेति द्विधोक्तानां च मेलने ॥
इत्थं मिलित्वालंकाराः शतं सप्तदशोत्तरम् ॥

[उपमा—]

स्वतःसिद्धेन भिन्नेन संमतेन च धर्मतः ।
वर्ण्यस्यान्येन साम्यं च वाच्यं चेदेकदोपमा ॥

सा तूपमा द्विधा प्रोक्ता पूर्णा लुप्तेति भेदतः।
साधारणस्य धर्मस्य ह्युपमानोपमेययोः॥
वाचकस्य च योगे तु सैव पूर्णेति संमता।
पुनश्च द्विविधा पूर्णा सा श्रौत्यार्थीविभेदतः॥
श्रौती तु साक्षात्सादृश्यवाचकेवादियोगके।
सा धर्मि(र्म्य)व्यवधानेन सादृश्यप्रतिपादकाः॥
प्रतीकाशादिशब्दाः स्युः पूर्णार्थी तत्र कीर्तिता।
समासगे तद्धितगे वाक्यगे इति ते पुनः॥
द्वे च त्रिधेत्थं पूर्णेयं षड्विधा परिकीर्तिता।

भास्वानिवोदयालम्बी नेत्रानन्दकरो हरिः।
इत्यत्र कथिता सम्यक्पूर्णा श्रौती समासगा॥ ४॥
धरवद्दृढतुङ्गस्य कुचस्यांशुकमस्पृशत्।
अत्र तद्धितगा पूर्णोपमा श्रौती प्रकाशिता॥ ५॥
पद्मं यथा वितनुते मुखं राधामुखं तथा।
इत्यत्र वाक्यगा पूर्णा श्रौती सम्यक्प्रकीर्तिता॥ ६॥
आलिङ्गत्यसकृत्कान्त्या कान्तां कामसतीनिभाम्।
हरिरित्यत्र कथिता पूर्णा चार्थी समासगा॥ ७॥
सौन्दर्ये कामकान्तावत्त्वं कान्ते भासि संततम्।
इत्यत्रार्थी तद्धितगा पूर्णा सम्यक्प्रकाशिता॥ ८॥
कान्तानेत्रे विराजेते कान्त्या पद्मस्य संनिभे।
इत्यत्र वाक्यगा पूर्णोपमा चार्थी प्रकीर्तिता॥ ९॥

यत्रैकद्वित्रलोपे वा तत्र लुप्तोपमा मता।
अधर्मा चावधामेयाधमेयावाचका तथा॥
अमेयवावाधमेयाधनवावानकाधना।
अनमेति च सा लुप्ता त्वेकादशविधा मता॥
लाघवेन प्रवृत्त्यर्थमित्थं संज्ञाः प्रकीर्तिताः।
धर्मस्य चानुपादाने सैवाधर्मोपमा मता॥

**आर्थी श्रौती च सा द्वेधा ते द्वे च त्रिविधे पुनः ।**
**समासगे तद्धितगे वाक्यगे इति षड्विधा ॥**

चुचुम्ब चन्द्रसदृशं राधिकावदनं हरिः ।
इत्यत्राधर्मोपमा स्यादार्थी प्रोक्ता समासगा ॥ १० ॥

कन्दर्पकल्पमब्जाक्षं मुहुः पश्यति राधिका ।
इत्यत्राधर्मोपमा स्यादार्थी तद्धितगा मता ॥ ११ ॥

दूति बोधय तां कान्तां तुल्यां प्राणैर्ममोक्तिभिः ।
इत्यत्राधर्मोपमा स्यादार्थी वाक्यगता मता ॥ १२ ॥

राधिकाया मुहुर्भाति विधुबिम्बमिवाननम् ।
इत्यत्राधर्मोपमा स्याच्छ्रौती प्रोक्ता समासगा ॥ १३ ॥

तस्याः पश्य भ्रुवौ भातश्चन्द्रवत्सुन्दरे मुखे ।
इत्यत्राधर्मोपमा स्याच्छ्रौती तद्धितगा मता ॥ १४ ॥

यथा मधुकरः पद्मे तथा कान्तामुखे भवान् ।
इत्यत्राधर्मोपमा स्याच्छ्रौती वाक्यगता मता ॥ १५ ॥

**धर्मवाचकलोपे तु तत्र स्यादवधोपमा ।**
**सा तु कर्मक्यचाधारक्यचालुप्ता क्विपा तथा ॥**
**कर्तृणमुल्कर्मणमुल्लुप्ताकर्मक्यङेति च ।**
**समासगेति विबुधैः सप्तधा परिकीर्तिता ॥**

विद्रुमीयति तन्नासा मौक्तिकं तेऽधरप्रभा ।
इत्यत्र संमता कर्मक्यचा लुप्तावधोपमा ॥ १६ ॥

समाधवा निकुञ्जेऽपि प्रासादीयति राधिका ।
इत्यत्र संमताधारक्यचा लुप्तावधोपमा ॥ १७ ॥

इन्दुबिम्बति ते वक्त्रं कण्ठः कम्बवति प्रिये ।
इत्यत्र विबुधैः प्रोक्ता क्विपा लुप्तावधोपमा ॥ १८ ॥

माननाराचचारे तत्कटाक्षाः संचरन्त्यहो ।
मयीत्यत्र मताकर्तृणमुल्लुप्ता वधोपमा ॥ १९ ॥

राधाधरं सुधादर्शं माधवः परिचुम्बति ।
इत्यत्र प्रस्फुटाकर्मणमुल्लुप्तावधोपमा ॥ २० ॥
हन्तकान्ताविप्रलम्भे चन्द्रश्चण्डकरायते ।
इत्यत्र कीर्तिता कर्तृक्यङालुप्तावधोपमा ॥ २१ ॥
याहि सत्वरमब्जाक्षं दूति तापः सुदुस्तरः ।
अस्मिन्समासगा प्रोक्ता विबुधैरवधोपमा ॥ २२ ॥

**उपमेयानुपादाने तत्रामेयोपमा मता ।**
**सापि द्विधार्थी श्रौती च ते द्वे च त्रिविधे पुनः ।**
**समासगे वाक्यगे च तथा तद्धितगे च षट् ॥**

राधिकासदृशी कान्ता नास्ति मत्तोषकारिणी ।
इत्यत्रामेयोपमा स्यादार्थी प्रोक्ता समासगा ॥ २३ ॥
माधवस्य समो लोके नास्ति राधामनोहरः ।
इत्यत्रामेयोपमा स्यादार्थी वाक्यगता मता ॥ २४ ॥
राधाकल्पा न काप्यन्या कामकेलीकलावती ।
इत्यत्रामेयोपमा स्यादार्थी तद्धितगा मता ॥ २५ ॥
नास्त्येव कापि भूलोके राधिकेवातिसुन्दरी ।
इत्यत्रामेयोपमा स्याच्छ्रौती प्रोक्ता समासगा ॥ २६ ॥
अन्या नास्ति तथा कापि यथा राधा मम प्रिया ।
इत्यत्रामेयोपमा स्याच्छ्रौती वाक्यगता मता ॥ २७ ॥
राधिकावन्न कुत्रापि गोप्यां कृष्णमनोहृतिः ।
अत्र तद्धितगामेयोपमा श्रौती प्रकीर्तिता ॥ २८ ॥

**धर्मोपमेयानिर्देशे त्वधमेयोपमा मता ।**
**सापि त्वमेयोपमेव श्रौती तद्धितगां विना ॥**

राधिकासदृशी नास्ति यन्मुकुन्दमनोहरा ।
अत्राधमेयोपमा स्यादार्थी सूक्ता समासगा ॥ २९ ॥
राधायाः सदृशी नास्ति यन्मुकुन्दमनोरमा ।
अत्राधमेयोपमा स्यादार्थी वाक्यगता मता ॥ ३० ॥

राधाकल्पा न काप्यस्ति यद्गोपीशतसेविता ।
इत्यत्रार्थी तद्धितगा त्वधमेयोपमा मता ॥ ३१ ॥
राधिकेव न लोकेऽस्ति यन्मुकुन्दपदे सदा ।
रतेत्यत्राधमेया स्याच्छ्रौती प्रोक्ता समासगा ॥ ३२ ॥
यथा राधा तथा नैव यत्कृष्णातिदयोदया ।
अत्र वाक्यगता श्रौती त्वधमेयोपमा मता ॥ ३३ ॥

**अधमेयोपमा चेयं न सर्वमतसंमता ।**
**वाचकस्यानुपादाने स्यात्तत्रावाचकोपमा ।**
**क्विपा लुप्ता क्यङा लुप्ता त्रिविधेति समासगा ॥**
खञ्जरीटति चाञ्चल्ये प्रोष्ठीपृष्ठायते द्युतौ ।
पद्मपत्रस्फुरन्नेत्र्या नेत्रमित्यत्र सा त्रिधा ॥ ३४ ॥

**वाचकस्योपमेयस्याप्यनिर्देशश्च यत्र सा ।**
**अमेयवोपमा तत्र प्रोक्तालंकारकोविदैः ॥**
राधाया अधरश्चारुर्माधुर्येण सुधीयति ।
**उपमेयस्य धर्मस्य लोपश्चेद्वाचकस्य च ।**
**कर्मक्यचावाधमेयोपमा तत्र प्रकीर्तिता ॥**
कल्पशाखीयति सतां गोपिकाजनकामुकः ॥ ३५ ॥
**उपमानेन धर्मेण लुप्ता चेद्वाचकेन च ।**
**तदा समासगा प्रोक्ता प्राज्ञैरधनवोपमा ॥**
कुरङ्गाक्षी सदापाङ्गान्करोति मयि राधिका ।
**वाचकस्योपमानस्य लोपे चावाचकोपमा ।**
मन्दं राधा समायाति मृगराजाल्पमध्यमा ॥ ३६ ॥
**धर्मोपमानयोर्लोपे प्रोक्ता तत्राधनोपमा ।**
**आर्थी श्रौतीति सा द्वेधा कीर्तिता द्विविधा यथा ॥**
मदेभसंनिभगतिः कदा यातीह राधिका ।
कथं द्रुतं गच्छसि त्वं करिणीव गतिस्तव ॥ ३७ ॥

उपमानस्य लोपश्चेत्तत्र स्यादनमोपमा।
अनायासमभूत्तस्य राधिकायाश्च मेलनम्।
काकतालवदुद्याने निर्जने यमुनातटे॥ ३८॥

सकृत्पृथग्धर्मिकाभ्यां सोपमा द्विविधा पुनः॥
तत्र वर्ण्यावर्ण्यगस्य धर्मस्य सकृदेव तु।
निर्देशे सति तत्राद्या स्यात्सकृद्धर्मिका मता॥
जनाः प्रणम्रशिरसः सेवन्ते राधिकापतिम्।
साधूनां हृदयानन्दं गुरुं शिष्या यथा तथा॥ ३९॥

उपमानगतस्यास्याप्युपमेयगतस्य च।
पृथग्धर्मस्य निर्देशे सा पृथग्धर्मिका मता॥
सा तु वस्तूपमा बिम्बोपमाभेदाद्द्विधा मता।
वस्तुप्रतिवस्तुभावेन निर्देशे प्रथमा मता॥
कुचस्थली कुरङ्गाक्ष्या मालया परिलालिता।
मेरुस्थलीव गङ्गाया धारया समलंकृता॥ ४०॥

बिम्बप्रतिबिम्बभावेन निर्देशे त्वपरा मता।
स्फुरत्कृष्णनखश्रीकमिदं राधाकुचस्थलम्।
शिवलिङ्गमिवाभाति चन्द्रलेखाविभूषितम्॥ ४१॥

मालारूपोपमा मालारूपेणापि क्वचिद्भवेत्॥
पद्माति कञ्जकान्ताति कामकान्ताति राधिका।
पूर्वपूर्वसमानत्वमुत्तरोत्तरवस्तुनः।
मेखलारचनन्यायाद्यदि स्याद्रशनोपमा॥
सौन्दर्यमिव चातुर्यं चातुर्यमिव धीरता।
धीरतेव चटूक्तिश्च राधिकायां विराजते॥ ४२॥

[अनन्वयः—]

एकस्यैवोपमानोपमेयत्वे वस्तुनो यदि।
अनन्वयः स तु द्वेधा सधर्माधर्मभेदतः॥

कामकेलीकलाभिज्ञा राधिकेव च राधिका।
कृष्णस्य सदृशं कृष्णं मुहुरालिङ्ग्य चुम्बति ॥ ४३ ॥

[भ्रान्तिः—]

तिरोहिते च विषये सादृश्यात्कविसंमतात्।
विशेष्यावृत्तिविषयज्ञानं भ्रान्तिरितीर्यते।
सा त्वेकविषयान्योन्यविषयेति द्विधा मता॥

राधिकामुखमम्भोजं मत्वा मत्तमधुव्रतः।
परिभ्रमन्पर्यचुम्बदत्रैकविषया मता ॥ ४४ ॥

राधिका माधवं मत्वा निशि स्वपतिमागता।
सोऽपि तां मालतीं मत्वा चुचुम्बेत्यत्र चापरा ॥ ४५ ॥

[प्रतीपम्—]

उपमानप्रतीकूलः प्रतीपं धर्म इष्यते।
तत्तु पञ्चविधं प्रोक्तं पञ्चापि ब्रूमहे क्रमात्॥
उपमानोपमेयत्वव्यत्यासे प्रथमं मतम्।
उदितोऽयं विधू राधे पश्य ते मुखसंनिभः।
द्वितीयं तूपमानस्याप्युपमेयत्वलाभतः।
उपमेयस्य चेद्गर्वपरिहारवचो मतम्॥
त्यज गर्वं मुखेन त्वं तादृशश्चन्द्रमा न किम् ॥ ४६ ॥
व्यत्यासं परिकल्प्यादावुपमानोपमेययोः।
कल्पितस्योपमेयस्योत्कर्षादन्यस्य चेद्यदि।
तृतीयं तु प्रतीपं स्यादनादरवचस्तदा॥
विष कः क्रौर्यगर्वस्ते त्वादृशं दुर्वचो न किम्।
वर्ण्योपमाना निष्पत्तिवचोऽन्यस्मिंश्चतुर्थकम्।
जनापवादो दुर्जेयस्त्वन्मुखाभः शशीति यः ॥ ४७ ॥
उपमेयस्य चोत्कर्षात्कैमर्थ्यं यत्र कथ्यते॥
उपमानस्य तत्र स्यात्प्रतीपं पञ्चमं मतम्।

वृथोदयति निर्लज्जः शशी सति तवानने।
प्रतीपं पञ्चमं केचिदाक्षेपं परिचक्षते॥

[रूपकम्—]

बिम्बाविशिष्टे विषये न तिरोहितरूपिणि।
आरोपविषयीभूतं रूपकं चोपरञ्जकम्॥
तद्रूपकं मतं द्वेधाभेदताद्रूप्यभेदतः।
आरोपे सत्यभेदस्याभेदरूपकमिष्यते॥
प्रमोदं तनुतेऽस्माकं राधिकाया मुखं शशी॥ ४८॥
ताद्रूप्यस्य समारोपे सति ताद्रूप्यरूपकम्।
मुदं तनोति राधाया मुखमन्यः सुधाकरः।
अधिकं च समं न्यूनं सावयवं चैव निरवयवम्।
किं च परम्परितं चेत्येवं चाभेदरूपकं षोढा॥
पूर्वावस्थात आरोप्यमाणस्याधिक्यदर्शने।
अवस्थायां तु तस्यां चेदधिकाभेदरूपकम्॥
आश्रित्य राधिकां त्यक्तकलङ्कश्चन्द्रिरोऽभवत्॥ ४९॥
न्यूनताधिक्ययोश्चैवानिर्देशे सममीरितम्।
राधिकाया मुखं साक्षाच्चन्द्र एव न संशयः।
प्राग्दशातो न्यूनता चेत्तन्न्यूनाभेदरूपकम्॥
असागरोद्भवः साक्षात्सुधांशुस्ते मुखं सखि॥ ५०॥
समस्तवस्तुविषयमेकदेशविवर्ति च।
इति सावयवं चापि द्विविधं परिकीर्तितम्॥
यत्रावयविनश्चैवावयवानां समासतः।
समस्तवस्तुविषयं भवेत्तत्र निरूपणम्॥
राधिकावदनाम्भोजं सखदे कृष्णबंभरः।
अथावयविनो यत्रावयवानां निरूपणात्।
निरूपणं गम्यते स्यादेकदेशविवर्ति तत्॥
लावण्यपयसा पुष्टं सदाधरमधूल्लसत्॥ ५१॥

तिलकभ्रमरश्लिष्टं हरिः पश्यति तन्मुखम् ।
यत्रान्वयविनिरूपणमात्रेऽवयवनिरूपणमात्रे(?) वा ।
तन्निरयवं ज्ञेयं कविसंरम्भस्य विश्रान्तिः ॥
तद्द्वेधा केवलं माला तयोर्लक्ष्ये ब्रुवे क्रमात् ।
सिचयान्तश्चले तस्याः कुचकुम्भेऽकरोत्करम् ॥ ५२ ॥
सौन्दर्याब्धिर्लता कान्तेर्बाणः कामस्य या प्रिया ।
तत्परम्परितं यत्तु रूपकाश्लिष्टरूपकम् ॥
तदपि द्विविधं प्रोक्तं श्लिष्टाश्लिष्टविभेदतः ।
तद्द्वयं च पुनर्द्वेधा मालाकेवलभेदतः ॥
अथोदाहरणान्येतद्भेदानां ब्रूमहे क्रमात् ।
श्यामालंकारशीतांशुः सुमनोवृन्दमाधवः ॥ ५३ ॥
कमलोदयमार्तण्डः स जीयान्नन्दनन्दनः ।
श्रुतिशेखरविस्फूर्जन्मञ्जुलास्योरुमण्डले ॥ ५४ ॥
नन्दसूनोर्नरीनर्ति राधिकापाङ्गनर्तकी ।
मारदावानलासारः कृष्णप्रेमलतामधु[ः] ॥ ५५ ॥
वासुदेवचकोरेन्दुबिम्बं जयतु राधिका ।
राधिकानलिनीवक्त्रकुसुमभ्रमरो हरिः ॥ ५६ ॥
खेलत्युच्छृङ्खलं गोपललनारासमण्डले ।
समाधिकन्यूनभेदात्त्रिधा ताद्रूप्यरूपकम् ॥
सुगमत्वान्न लक्ष्मैतल्लक्ष्याणि ब्रूमहे क्रमात् ।
पङ्कजं पश्य कान्तेति राधयोक्तः स माधवः ॥ ५७ ॥
उवाचान्येन किं तेन सुन्दरे सति ते मुखे ।
निशामुकुलितात्पद्मान्मुखपद्मं मनोहरम् ॥ ५८ ॥
इति ब्रुवन्नाससाद राधां माधवषट्पदः ।
असागरसमुद्भूतामत्रिविष्टपवासिनीम् ।
अन्यां कल्पलतामेनां हरिः पश्यति राधिकाम् ॥ ५९ ॥

केचिदाहुश्चाष्टचत्वारिंशद्भेदांश्च रूपके ॥

[स्मृतिः—]

सदृशानुभवादन्यस्मरणं स्मृतिरिष्यते ।
केवलात्मविशेषात्मभेदात्सा द्विविधा मता ॥
स्मरणे सदृशस्यैव केवलस्मृतिरीरिता ।
हरिः सस्मार राधाया मालती कामकेलिषु ।
विशेषस्मृतिरित्युक्ता संबन्धिस्मरणे सति ॥
माधवो राधिकां पश्यन्क्षीरपाथोधिमस्मरत् ॥ ६० ॥

[उपमेयोपमा]

उपमानोपमेयत्वे पर्यायेण द्वयोर्यदि ।
सोपमेयोपमा द्वेधा सधर्माधर्मभेदतः ॥
सुन्दरी मालतीवासौ राधा राधेव मालती ।
राधिका मालतीवासौ राधिकेव च मालती ॥ ६१ ॥

[उल्लेखः—]

अनेकधोल्लेखनं तु विषयैर्वा गृ(ग्र)हीतृभिः ।
एकस्य वस्तुनोऽनेकैरुल्लेखालंकृतिर्मता ॥
विषयग्राहि(ह)कोल्लेखभेदेन द्विविधोऽपि सः ।
विषयाणामनेकत्वे विषयोल्लेख इष्यते ।
श्लिष्टाश्लिष्टविभेदेन द्वेधा लक्ष्यं ब्रुवे क्रमात् ॥
उग्रः शत्रौ गुरुर्वाण्यां चन्द्रो नेत्रप्रहर्षणे ।
स्वर्दुरर्थिषु लावण्ये कन्दर्पो राधिकाविटः ॥ ६२ ॥
गृ(ग्र)हीतॄणामनेकत्वे ग्राहि(ह)कोल्लेख इष्यते ।
तमीक्षन्ते स्त्रियः कामं द्विषः कालं जना नृपम् ॥ ६३ ॥

[परिणामः—]

प्रकृतस्योपयोगित्वाद्विषयात्मतया भवेत् ।
विषयी परिणामस्तदा मतः ॥

सामानाधिकरण्येन व्यधिकरणतया तथा ।
विषयात्मत्वमापन्नः स द्वेधा द्विविधो यथा ॥
प्रसन्नेन दृगब्जेन राधिका वीक्षते हरिम् ।
विधाय राधिका शश्वत्कटाक्षैः पुष्पमालिकाम् ।
प्रत्यग्रामर्पयामास प्रसन्नां नन्दनन्दने ॥ ६४ ॥

[अपह्नुतिः—]

अभेदप्रतिपत्त्यङ्गाङ्गित्वान्यतरवाँस्तथा ।
निषेधोऽपह्नुतिः सा तु द्विविधाङ्गाङ्गिभेदतः ॥
अभेदप्रतिपत्त्यङ्गत्वं निषेधस्य चेद्यदि ।
अङ्गापह्नुतिरित्युक्ता सा चतुर्धा प्रकीर्तिता ॥
शुद्धापह्नुतिपर्यस्तहेतुकैतवभेदतः ।
वर्ण्येऽन्यारोपफलको वर्ण्यधर्मस्य निह्नवः ॥
कैतवादिपदाव्यङ्ग्यस्तथानुक्तनिमित्तकः ।
सा शुद्धापह्नुतिः प्राज्ञैः प्रोक्तालंकारकोविदैः ॥
राधिकाया मुखं नेदं किं तु चन्दिरमण्डलम् ।
वर्ण्येऽन्यारोपफलकस्त्वन्यधर्मस्य निह्नवः ।
कैतवादिपदाव्यङ्ग्यः पर्यस्तापह्नुतिर्मता ।
हेतुकेवलभेदेन सा द्वेधा परिकीर्त्यते ॥
कालकूटो विषं नैव विषं पद्मा मता मम ॥ ६५ ॥
पीत्वा जागर्ति यच्छंभुर्हरिः पश्यन्विमुह्यति ।
नायं सुधाकरः किं तु मुखं तस्याः सुधाकरः ॥ ६६ ॥
शुद्धैवोक्तनिमित्ता चेद्धेत्वपह्नुतिरिष्यते ।
श्लिष्टाश्लिष्टविभेदेन द्वेधा सा परिकीर्तिता ॥
न मुखं भ्रमराघ्रातमिदं किं तु सरोरुहम् ।
नेदं सरोरुहं नैशं किं तु शुभ्रांशुमण्डलम् ॥ ६७ ॥
कैतवादिपदव्यङ्ग्यो निषेधो यत्र दृश्यते ।

वर्ण्यधर्मस्य तत्र स्यात्कैतवापह्नुतिर्मता ॥
शुद्धहेतुविभेदेन द्विविधा सापि कीर्तिता।
आद्यैकधान्त्या द्विविधा श्लिष्टाश्लिष्टविभेदतः ॥
बिम्बमेव वरीवर्ति राधाया अधरच्छलात्।
निर्यान्ति कामविशिखाः कान्ताक्ष्यन्तेक्षणच्छलात् ॥ ६८ ॥
नो चेत्तरुणसंक्षोभस्तत्ताहक्षः कथं भवेत्।
परिस्फुरति पाथोजं कामिनीवदनच्छलात्।
नो चेत्कथं भवेत्तस्य चुम्बने भ्रमरादरः ॥ ६९ ॥

यथा वा।

इदं कुवलयं भाति जानकीनयनच्छलात्।
नो चेत्ताद्दग्रामराजप्रेमपात्रं कथं भवेत् ॥ ७० ॥
अभेदप्रतिपत्त्यङ्गित्वं निषेधस्य चेत्तदा।
स्यादङ्ग्यपह्नुतिर्द्वेधा छेकभ्रान्तिविभेदतः ॥
वाक्यान्यथायोजनेन निषेधस्तथ्यवस्तुनः।
शङ्कातोऽन्यस्य चेत्तर्हि छेकापह्नुतिरुच्यते ॥
पाण्याहतोऽपतत्पादे कान्तः किं नहि कन्दुकः।
निषेधोऽन्यस्य चेद्भ्रान्तिविषयस्य च वस्तुनः।
स्वकीयवचसा तत्त्वकथनाद्भ्रान्त्यपह्नुतिः।
सा तु द्विधा केवला च कल्पिता चेति भेदतः ॥
सोच्छ्वासं सहकम्पं तापं बहुलं सखीह न सहेऽहम्।
किं ज्वरभारो नहि नहि सशरः संनद्धकार्मुकः कामः ॥ ७१ ॥
नाहं हिमगिरिजापतिरपि रतिहरणे पटुः सुरद्वेषी।
बाधय तावबलां मा बाधय किं तेन ते यशो भवति ॥ ७२ ॥
तत्त्वाख्यानोपमां केचिद्बभषुः कल्पितामिमाम्।

(अथोत्प्रेक्षा—)

अवर्ण्यधर्मसंबन्धाद्वर्ण्ये संभावना भवेत्।
अन्यत्वेन मतोत्प्रेक्षा वाच्या गम्येति सा द्विधा ॥

इवादीनामुपादाने वाच्योत्प्रेक्षेति कथ्यते ।
इव स्वित्किं किमुद्वापि किमु किंनु कथं ननु ॥
मन्ये शङ्के नु हूं प्रादुः प्रायो नूनं खलु ध्रुवम् ।
किमु स्म वत नामाहो उत्प्रेक्षाबोधका इमे ॥
जातिक्रियाद्रव्यगुणभेदाद्वाच्या चतुर्विधा ।
चतुर्विधापि च द्वेधा भावाभावविभेदतः ॥
अष्टधापि पुनस्त्रेधा वस्तुहेतुफलात्मना ।
स्वरूपं च स्वभावश्च वस्त्विमे चैकवाचकाः ॥
वस्तूत्प्रेक्षा द्विधोपात्तानुपात्तहेतुभेदतः ।
गुणक्रियानिमित्तत्वाभ्यामुपात्तनिमित्तकाः ॥
वस्तुहेतुफलोत्प्रेक्षा द्विविधाः परिकीर्तिताः ।
एतादृशी क्रियावस्तूत्प्रेक्षैव द्विविधा पुनः ॥
उक्तानुक्तस्वरूपाभ्यां पुनस्तु सकला अपि ।
द्विधाहेतुफलोत्प्रेक्षाः सिद्धासिद्धविभेदतः ॥
एवं च वाच्योत्प्रेक्षाः स्युश्चतुर्भिरधिकं शतम् ।
प्राचीनानां मते वाच्योत्प्रेक्षाः षण्णवतिः स्मृताः ॥
नवीनाः केचिदूचुस्तां षट्पञ्चाशद्विधामपि ।
इवादिकानुपादाने गम्योत्प्रेक्षां प्रचक्षते ॥
जातिक्रियाद्रव्यगुणभेदात्सापि चतुर्विधा ।
भावाभावविभेदेन चतुर्धापि च सा द्विधा ॥
इमाः सर्वाः पुनस्त्रेधा वस्तुहेतुफलात्मना ।
द्वेधा हेतुफलोत्प्रेक्षे सिद्धासिद्धविभेदतः ॥
गुणक्रियानिमित्तत्वाभ्यां सर्वा द्विविधा इमाः ।
एवं च गम्योत्प्रेक्षायां भेदाश्चाशीतिरीरिताः ॥
दिङ्मात्रं ग्रन्थबाहुल्यभीत्योदाह्रियते क्रमात् ॥

मन्दीभवन्स्वान्वयजातराघवप्रदत्तलङ्काधिपतित्वमीक्षितुम् ।
विभीषणस्यास्ति न वेति चिन्तया दिशं जगामेव यमस्य भास्करः ॥७३॥

करकलितचारुवीटी कुम्भकुचाक्रान्तकुसुम्भमयशाटी।
कान्ता कामवधूटी तरुणान्मोहितुमिहैति कर्णाटी॥ ७४॥

(अथातिशयोक्तिः—)

यच्चानुपात्तविषयाहार्यस्य विषयं तथा।
निर्णयस्य हि चाभेदताद्रूप्यान्यतरच्च तत्॥
द्विविधातिशयोक्तिः सा भेदताद्रूप्यभेदतः।
अभेदातिशयोक्तिश्चाहार्योऽभेदस्य चेद्यदि॥
वयस्य पश्य तमसा बद्धं शीतांशुमण्डलम्।
ताद्रूप्यातिशयोक्तिः स्यात्ताद्रूप्यारोपणे सति।
पश्य स्फुरति मित्रात्र मुक्तलक्ष्मा क्षपाकरः॥ ७५॥
अभेदातिशयोक्तिस्तु शुद्धभेदकभेदतः॥
संबन्धात्यन्तचपलासंबन्धाक्रमभेदतः।
सापह्नवा चेति बुधैरष्टधा परिकीर्तिता॥
भेदकातिशयोक्तिस्तु वर्ण्यस्यान्यत्ववर्णनम्।
अन्येयं चातुरी तस्या अन्या लावण्यपद्धतिः।
संबन्धातिशयोक्तिः स्यादयोगे योगकल्पनम्॥
सूर्याश्वा विश्रमन्त्यत्र ग्रीष्मे गोपुरगह्वरे॥ ७६॥
पौर्वापर्यव्यतिक्रान्तिः कार्यकारणयोर्यदि।
अत्यन्तातिशयोक्तिस्तु तदा प्राज्ञैः प्रकीर्तिता॥
आदौ महानभूत्स्नेहः पश्चाद्दर्शनमावयोः।
चपलातिशयोक्तिस्तु कार्ये हेतुप्रसक्तिजे।
यास्यामीति प्रियोक्त्येयमूर्मिकां तनुतेऽङ्गदम्॥ ७७॥
योगेऽप्ययोगोऽसंबन्धातिशयोक्तिः प्रकीर्तिता॥
न सेवे भोजनानन्दं सति त्वयि वरानने।
समकालत्वेऽक्रमातिशयोक्तिर्हेतुकार्ययोः।
राधा तदैवानुरक्ता यदा वीक्षति माधवः॥ ७८॥
सापह्नवेति सा प्रोक्ता यद्यपह्नुतिगर्भता॥

लतायां चन्द्रमा भाति भ्रान्ताः पश्यन्ति तं दिवि ॥

(अथ संदेहः—)

**विषयी विषयश्चोभौ विषयौ संशयस्य चेत् ।**
**कविसंमतसादृश्यात्संदेहालंकृतिर्मता ।**
**शुद्धा निश्चयगर्भेति सा द्वेधा परिकीर्तिता ॥**

राधा हैमलता वेयं मालती वा वरानने ।
राधिका किमियं भीता दिवा नायाति सा पुनः ।
मालतीवाधुनैवागाद्वेइं केयं न विद्महे ॥ ७९ ॥

(अथ तुल्ययोगिता—)

**वर्ण्यानां वाप्यवर्ण्यानां साम्यं केवलधर्मतः ।**
**कथ्यते चेत्तत्र तुल्ययोगिता सा त्रिधा मता ॥**
**शुद्धा हिताहिता चैव समाभा चेति भेदतः ।**
**शुद्धापि द्विविधा प्रोक्ता वर्ण्यावर्ण्यविभेदतः ॥**

पूर्वाचलप्रान्तभाजि स्फुरद्राकानिशाकरे ।
संकुचन्ति सरोजानि स्वैरिणीवदनानि च ॥ ८० ॥
राधिके तव सौन्दर्यं दृष्ट्वा जानीमहे वयम् ।
कालिन्द्याः कमलायाश्च काषायालम्बनं वरम् ॥ ८१ ॥

**हिताहितापि तु हिताहितयोस्तुल्यवर्तनम् ।**
**श्लिष्टाश्लिष्टविभेदेन साद्वेधा परिकीर्तिता ॥**

अलंकारातियोगं स शत्रोर्मित्रस्य चाकरोत् ।
पूजकस्य च्छेदकस्य मन्दारः कटुरेव सः ॥ ८२ ॥

**गुणोत्कृष्टैः समीकृत्य समाभा प्रतिपादनम् ।**

अनेकवाहिनीयुक्तो नृपो जाड्येन वर्तनात् ।
समुद्रोऽपि भवत्याशु सर्वदा मुखभङ्गवान् ॥ ८३ ॥

अथ प्रतिवस्तूपमा—)

**उपमानोपमेयार्थौ पृथग्वाक्यद्वये यदि ॥**
**सामान्येन विनिर्दिष्टौ प्रतिवस्तूपमा मता ।**
**साधर्म्यवैधर्म्यभेदात्सा द्वेधा परिकीर्तिता ॥**

प्राचीनम्—

कवितारसचातुर्यं रसज्ञो वेत्ति नो कविः।
सुतासुरतचातुर्यं जामाता वेत्ति नो पिता ॥ ८४ ॥

आराधितोऽपि नीचः परिदर्शयति स्वकीयकटुभावम्।
न जहाति पारिभद्रः पयसा सिक्तोऽपि नैजकटुभावम् ॥ ८५ ॥

(अथ दीपकम्—)

**वर्ण्यानामप्यवर्ण्यानां धर्मैक्यं दीपकं मतम्।**

दुर्जनधिषणाभीक्ष्णं मृगयति दोषान्गुणेषु विलसत्सु।
पत्यौ तरुणे सत्यपि जातिविहीनं विटं कुलटा ॥ ८६ ॥

(अथावृत्तिदीपकम्—)

**तत्पदार्थोभयावृत्तौ सत्यामावृत्तिदीपकम् ॥**

स्तननति वृद्धावृन्दं स्तननति कण्ठीरवस्य चारावः।
विलसति कमलश्रेणी स्फुरति च मल्लीमतल्लिकाशैली ॥ ८७ ॥

साकूतं वीक्षते राधा वीक्षते पश्य मालती।

(अथ दृष्टान्तः—)

**चेद्बिम्बप्रतिबिम्बत्वं भिन्नवाक्यार्थधर्मयोः।**
**दृष्टान्तः स तु साधर्म्यवैधर्म्याभ्यां द्विधा मतः ॥**

मुकुन्द एव गोपीनां कदम्बं तोषयत्यहो।
वसन्त एव वल्लीनां विकासयति संचयम् ॥ ८८ ॥

मुकुन्ददर्शनादेव सस्मितं राधिकाननम्।
निद्राति तावन्नलिनं यावन्नोदेति भानुमान् ॥ ८९ ॥

(अथ व्यतिरेकः—)

**भेदप्रधानसाधर्म्यमुपमानोपमेययोः।**
**व्यतिरेकः स तु त्रेधाधिकन्यूनसमात्मना ॥**

स्मरेण सदृशः सोऽभूत्तथापीयं भिदा तयोः।
वियुक्तसयहृर्ताद्यस्तत्कर्तान्यः स्वचेष्टितैः ॥ ९० ॥

मञ्जुलनासा विहिता विटकरपरिलालिता श्यामा ।
तरुणीव तव किरीयं किं स ग्रहणात्करोति दृक्क्षोभम् ॥ ९१ ॥

प्राचीनम्—

दृढतरनिबद्धमुष्टेः कोशनिषण्णस्य सहजमलिनस्य ।
कृपणस्य कृपाणस्य च केवलमाकारतो भेदः ॥ ९२ ॥

(अथ सहोक्तिः—)

**सहार्थेनान्वयः प्रोक्तः सहोक्तिः कविरञ्जकः ।**
स्थिते कृष्णधराधीशे याचकानीकमध्ययोः ।
देहीति शब्दो दिक्प्रान्तान्कीर्त्या सार्कं ययौ रयात् ॥ ९३ ॥

(अथ निदर्शना—)

**वाक्यार्थस्योपमानस्याभेदारोपो हि दृश्यते ।**
**उपमेये च वाक्यार्थे तत्र शुद्धा निदर्शना ॥**
बन्धुजीवाधराया यदधरे वीटिकार्पणम् ।
इदं दीपकदम्बेन प्रकटीकरणं रवेः ॥ ९४ ॥
**उपमानोपमेयान्यतरस्मिन्कथिता बुधैः ।**
**तदन्यतरधर्मस्यारोपश्चान्या निदर्शना ॥**
कान्ते याते मुखे लीला दृश्यते सा सरोरुहे ।
खञ्जरीटविलासं ते धत्ते नेत्रयुगं सखि ॥ ९५ ॥
**सतोऽसतो वाप्यर्थस्य परेषां क्रिययात्मनः ।**
**निबध्यते बोधनं चेदपरा स्यान्निदर्शना ॥**
सुमनःसंगमः पुंसां महोन्नतिषु कारणम् ।
इति ब्रुवंस्तन्तुरल्पोऽप्यभवद्राजमौलिगः ॥ ९६ ॥
हतः शत्रुरिति ज्ञात्वा तेजस्वी न परिभ्रमेत् ।
इत्याजगामान्धकारः पुनरस्तंगते रवौ ॥ ९७ ॥

(अथ विनोक्तिः—)

**विना संबन्धिना येन केनचिद्वर्ण्यवस्तुनः ।**
**अरम्यता रम्यता वा विनोक्तिरिति कथ्यते ॥**

ताहक्षमपि चातुर्यं सौन्दर्यं तव मानिनि ।
व्यर्थमेवेति जानीहि सरसं दयितं विना ॥ ९८ ॥
विना क्रूरस्वरं काकमाकन्दं मकरन्दितम् ।
गाहस्व गाढं गन्तारः कोकिलं मन्वते जनाः ॥ ९९ ॥

(अथ समासोक्तिः—)

**अप्रस्तुतपरिस्फूर्तिर्यत्र प्रस्तुतवर्णने ।**
**समासोक्तिर्द्विधा सापि श्लिष्टाश्लिष्टविभेदतः ॥**

आदौ रक्तो गोभिः संमान्यैन्द्रीमुखं चुचुम्बायम् ।
अद्य समुज्झितरागः स्पृहयति भूयोऽपि वारुणीं गन्तुम् ॥१००॥

(प्राचीनम्—)

विदितं ननु कन्दुक ते हृदयं प्रमदाधरसंगमलुब्ध इह ।
करतामरसाभिहतः पतितः पतितः पततः पुनरुत्पतसि ॥ १०१ ॥

(अथ श्लेषः—)

**नानार्थसंश्रयैः शब्दैः साधर्म्यप्रतिपादनम् ।**
**वर्ण्यावर्ण्योभयेषां चेच्छ्लेषालंकृतिरिष्यते ॥**

लसद्वराहश्रीर्व्यक्तकमलाश्लिष्टसद्रसः ।
स सूर्यः सर्वदा भूयात्तेजस्वी मङ्गलाय ते ॥ १०२ ॥
सदानभोगेन राज्ञा सदृशं ते मुखं सखि ।
राजा तव प्रियो भूयात्सदा कुवलयप्रभुः ॥ १०३ ॥

प्राचीनम्—

सर्वालंकारयुक्तापि न श्लिष्टा तरुणीव सा ।
वाणी मनोजातसुखं प्रौढानां न तनोति हि ॥ १०४ ।

(अथ परिकरः—)

**साभिप्रायं विशेष्यं चेत्प्रोक्तः परिकराङ्कुरः ।**

त्वदङ्गालोकने तन्वि पौलोमीवल्लभः पटुः ।

(अथाप्रस्तुतप्रशंसा—)

**अप्रस्तुतप्रशंसा तु प्रस्तुतं यदि गम्यते ।**
**अप्रस्तुतस्य कथनात्सारूप्यादिनिबन्धनात् ॥**

सारूप्यस्य तथा कार्यात्कारणस्य विशेषतः ।
सामान्यस्य विशेषस्य सामान्यात्कारणात्तथा ।
कार्यस्येति च पञ्च स्युः प्रतिपत्तिविभेदतः ॥

प्राचीनम्—

वेलावनाली यदि नीरदानां निषेवते नीरनिषेचनानि ।
गम्भीरता वा बहुनीरता वा तरङ्गिता वा जलधेर्वृथैव ॥ १०५ ॥

कलाहीनोऽभवच्चन्द्रो राधिके ते मुखोदये ।
आलिङ्गनोत्सुकापीयं नवोढा न स्पृशत्यमुम् ॥ १०६ ॥

कामकेलीसमारम्भे लज्जामाप वरानना ।
मुञ्च मुञ्च विभो क्लेशं तद्भर्ता मधुरामगात् ॥ १०७ ॥

(अथ पर्यायोक्तम्—)

प्रकारान्तरमाश्रित्य तद्विवक्षितवस्तुनः ।
सुचारु कथनं यत्र पर्यायोक्तं तदिष्यते ॥

कन्धरायां सैन्धवास्यं बन्धुरं यस्य सुन्दरम् ।
बन्धनच्छेदको भूयादन्धुरानन्दपाथसः ॥ १०८ ॥

(अथ पर्यायोक्तम्—)

प्रस्तुतस्यैव कार्यस्य वर्णनात्प्रस्तुतं तथा ।
कारणं गम्यते तत्रान्यत्पर्यायोक्तमीरितम् ॥

कृष्ण साद्य सनिःश्वासं कृशाङ्गी भुवि लुण्ठति ।

स्वस्याथ वा परस्येष्टकार्यसंपादनं मिषात् ।
पर्यायोक्तं तदन्यत्स्यादिति केचित्प्रचक्षते ॥

(प्राचीनम्—)

नवमल्लिकास्रजमभीष्टतमःशुचिसंभवां प्रणयिनीशिरसि ।
कलयन्स्वयं न कुशलेति किल प्रतिघट्टयत्युरुकुचावुरसा ॥ १०९ ॥

अये ननन्दसहिता व्रजामि निजमन्दिरम् ।
पिधायाररमा[1] प्रातः सुखं स्वपिहि सुन्दरि ॥ ११० ॥

1. अररं कपाटम्.

(अथ परीकरः—)

परीकरः परिकरः साभिप्राये विशेषणे।

दद्यात्ते संपदो राजन् केशवः कमलापतिः॥

(अथ व्याजस्तुतिः—)

स्तुत्या वा गम्यते निन्दा निन्दया गम्यते स्तुतिः।
व्याजस्तुतिरसौ यत्र स्तुत्या वा गम्यते स्तुतिः॥

त्वामेव प्रेयसीं नूनं जानामि मम दूतिके।
त्वदीयाभिरनेकाभिः क्रियाभिर्यत्स तोषितः॥ १११॥

साध्वि धिक् त्वां वृथा भर्तृसेवाशुष्कासि संततम्।
दृशापि न स्पृशस्येनं तादृशं सरसं विटम्॥ ११२॥

सुकृतं कृतमेतेन किं पद्मेन न विद्महे।
यतः शातोदरीपादसमतासुखमीहते॥ ११३॥

(अथ व्याजनिन्दा—)

व्याजनिन्दा मता निन्दा निन्दया गम्यते यदि।

विधिरेव विनिन्द्योऽयं किमागस्तव सुन्दरि।
कन्दर्पकल्पानीदृक्षान्पल्लवान्निर्ममे यतः॥ ११४॥

(अथाक्षेपः—)

आक्षेपोऽपह्नवाद्भिन्नो निषेधो जनरञ्जनः।
स चाभासितसंगुप्तभेदाद्द्वेधा प्रकीर्तितः॥
शुद्धाक्षेपस्तृतीयः स्यादिति केचित्प्रचक्षते।
शुद्धाक्षेपो निषेधश्चेत्स्वोक्तस्यैव विचारणात्॥

आनय प्रेयसीं दूति यद्वा सागच्छति स्वयम्।

आभासिताक्षेप उक्तो विशेषप्रतिपत्तये।
वक्ष्यमाणस्य वोक्तस्य निषेधाभासकीर्तनम्॥
वक्ष्यमाणोक्तभेदेन स द्वेधा परिकीर्तितः।
वक्ष्यमाणाक्षेप उक्तो वक्ष्यमाणनिषेधतः॥

विज्ञापयामस्ते किंचिद्दाशार्हकुलशेखर ।
विज्ञापनं किमथ वा सर्वज्ञे रक्षके त्वयि ॥ ११५ ॥

केचित्तु—

वक्ष्यमाणो भवेद्द्वेधा सामान्यांशविभेदतः ।
प्रतिज्ञाय च सामान्यं निषेधः कथनस्य चेत् ॥
सामान्यवक्ष्यमाणाख्य आक्षेपः परिकीर्तितः ।

अस्योदाहरणम् 'विज्ञापयामः' इत्यादि ।

अंशाक्षेपोऽपि चांशोक्तावंशान्तरनिषेधतः ॥
सर्वलोकाधिपः कृष्णो यूयं चार्कफलोपमाः ।
तद्युक्तमेवमथ वा किमुक्तैरिति साब्रवीत् ॥ ११६ ॥

इत्याहुः ।

उक्ताक्षेपो भवेद्द्वेधा सवस्तुकथनात्मना ।
वस्तुनस्तु निषेधश्चेद्वस्त्वाक्षेप इतीर्यते ॥
सारसारसपत्राक्षि सखी नाहं स माधवः ।
भ्रामं भ्रामं निकुञ्जेषु मुहुः शुष्यति ताम्यति ॥ ११७ ॥
कथनस्य निषेधश्चेत्कथनाक्षेप उच्यते ॥
रक्षणीयोऽहमित्युक्तौ रक्षादीक्षे कथं त्वयि ।
तिरोहिते निषेधे च व्यक्तेऽनिष्टविधौ सति ।
संगुप्ताक्षेपनामासावलंकारः प्रकीर्तितः ॥
गच्छ गच्छसि चेच्छीघ्रं वृथा किमु विलम्बसे ।
मारसुन्दर तत्रैव कन्याया मे वरो भव ॥ ११८ ॥

(अथ प्रस्तुताङ्कुरः—)

प्रस्तुते वर्ण्यमाने तु प्रस्तुतान्तरवस्तुनः ।
सारूप्येण द्योतनं चेत्तत्र स्यात्प्रस्तुताङ्कुरः ॥

प्राचीनम्—

कमलिनि मलिनीकरोषि चेतः किमिति बकैरवहेलितानभिज्ञैः ।
परिणतमकरन्दमार्मिकास्ते जगति भवन्तु चिरायुषो मिलिन्दाः ॥ ११९॥

(अथ विरोधाभासः—)

आपाततो विरोधश्चेद्विरोधाभास इष्यते।
जात्यादीनां विरोधाः स्युर्जातिद्रव्यक्रियागुणैः॥
तस्मादयं दशविधः कथितः श्लेषजीवितः।
निरूपणं तु जात्यादेः शेषविन्दौ भविष्यति॥

रंज्जन्तो[1] लोअमिअं राएत्ति जणेहिं सलहणिज्जोसि।
माहव णिरिव कहं सा रत्ता वि वलक्खिआ जाआ॥ १२०॥

सुगमत्वादिहैतेषां दिङ्मात्रमिति दर्शितम्।

(अथ विषमम्—)

घटनानर्हयोर्यत्र घटना विषमं मतम्।

केयं कनकवर्णाङ्गी सुन्दरी कामिनीमणिः।
क पतिस्तादृशो वक्रः कीदृशी घटना विधेः॥ १२१॥

हेतोर्विरूपकार्यस्योत्पत्तिश्च विषमं मतम्॥

सितान्कटाक्षान्सृजति नेत्रमिन्दीवरप्रभम्।

इष्टार्थोद्यमतोऽनिष्टप्राप्तिश्च विषमं मतम्।

मार्ष्टुं कलङ्कं शीतांशुर्मुखं सोऽजनि सुभ्रुवः।
तत्रापि तिलकव्याजात्कलङ्कक्लेशमन्वभूत्॥ १२२॥

इष्टार्थोद्यमनाद्यत्र नेष्टाप्तिश्च केवलम्।
अनिष्टस्याप्यवाप्तिश्चेदपरं विषमं मतम्॥

पाञ्चालीसङ्गसंमोदकाङ्क्षया रङ्गमन्दिरम्।
प्रविष्टः कीचकस्तत्र सद्यो मर्दनमन्वभूत्॥ १२३॥

परानिष्टार्थमुद्योगात्स्वानिष्टाप्तिश्च तन्मतम्॥

दिधक्षन्हनुमत्पुच्छमन्वभूत्स्वपुरक्षयम्।

(अथ विशेषोक्तिः—)

विशेषोक्तिरनुत्पत्तिः कार्यस्य सति कारणे।

---

१. 'रञ्जयँल्लोकमिमं राजेति जनैः श्लाघनीयोऽसि।
माधवनृप कथं सा रक्तापि वलक्षिता जाता॥' इति च्छाया.

उभयोः सदृशं रूपं चातुर्यं विजनस्थितिः ।
अहो तथापि दैवेच्छा नाभूत्सङ्गसुखं तयोः ॥ १२४ ॥

(अथासंभवः—)

**असंभवोऽर्थनिष्पत्तेरसंभाव्यत्वकीर्तनम् ॥**
को वेद बालः फालाक्षचापमारोपयेदिति ।

(अथ विभावना—)

**विनापि कारणं कार्यस्योत्पत्तिः स्याद्विभावना ।**
अनाहृतोऽपि मीनाक्ष्या तामेवासौ निषेवते ।
**विभावना परा धर्मविकलेनापि हेतुना ॥**
उत्पत्तौ यदि कार्यस्य संबन्धविकलेन वा ।
अदृढैः कौसुमैः शस्त्रैरजयज्जगदात्मभूः ॥ १२५ ॥
**कार्योद्भवश्चेत्प्रत्यूहे सत्यप्यन्या निदर्शना ।**
पत्यौ सुप्तेऽपि पार्श्वे सा मामाश्लिष्यति कामिनी ।
**विभावना चतुर्थी चेत्कार्योत्पत्तिरकारणात् ॥**
इन्दीवरदलात्पश्य निःसरन्ति सिताः शराः ।
**विरुद्धहेतोः कार्यं चेत्पञ्चमी स्याद्विभावना ।**
कर्पूरपङ्कः(ङ्काः ?) कञ्जाक्षीं हन्त संतापयन्ति ताम् ।
**षष्ठी विभावना प्रोक्ता कार्यात्कारणजन्म चेत् ॥**

प्राचीनम्—

अम्बुजमम्बुनि जातं क्वचिदपि न च जातमम्बुजादम्बु ।
बाले नवरतिकाले तवाक्षिसरोजाद्विगलितमम्बु ॥ १२६ ॥

(अथासंगतिः—)

**भिन्नाधिकरणत्वे तु कार्यहेत्वोरसंगतिः ।**
कृष्णे बिभ्रति भूभारं विनम्रा जनमौलयः ।
**अन्यत्र करणीयस्य वस्तुनोऽन्यत्र चेद्यदि ।**
**करणं तत्र विबुधाः द्वितीयासंगतिं विदुः ।**
राजन्प्रत्यर्थिवामाङ्गी कङ्कणं नयनेऽकरोत् ॥ १२७ ॥

कार्यं कर्तुं प्रवृत्तस्य तद्विरुद्धकृतिश्च सा ॥
मोहं हर्तुं प्रवृत्तोऽपि बलवीर्मोहयत्यसौ ।

(अथ विचित्रम्—)

विचित्रं विपरीतश्चेत्तत्प्रयत्नः फलेच्छया ।
महत्सुखमवाप्तुं ते भवन्ते शैलवासिताम् ॥ १२८ ॥

(अथाधिकम्—)

आधाराधेययोरानुरूप्याभावोऽधिकं द्विधा ॥
पृथुलादपि चाधारादाधेयाक्षेपया स्वतः ।
आधेयाधिक्यकथनमधिकं प्रथमं मतम् ॥
अनन्तेष्वपि वेदेषु न विश्राम्यति ते स्तुतिः ।
विशालादपि चाधेयादाधाराक्षेपया स्वतः ।
आधाराधिक्यकथनं द्वितीयमधिकं मतम् ॥
प्रादेशमात्रे यत्कुक्षौ ब्रह्माण्डानि लुठन्ति हि ॥ १२९ ॥

(अथ समम्—)

समं स्याद्योगकथनं वस्तुनोरनुरूपयोः ।
मिथोऽनुरूपयोः प्रीती राधामाधवयोरभूत् ।
कारणेनानुरूप्यं च कार्यस्यान्यत्समं मतम् ॥
अबलाहननं युक्तं जातिभ्रष्टस्य ते मघो ॥ १३० ॥
अनिष्टमन्तरा स्वेष्टकार्यसिद्धिर्यदा भवेत् ।
इष्टार्थोद्यमनात्तत्र तृतीयं सममिष्यते ॥
मा रणं कुरु पुत्रेति जनकेन नियोजितः ।
पितुराज्ञामनुल्लङ्घ्य मारणं कृतवान्द्विषाम् ॥ १३१ ॥

(अथ व्याघातः—)

यत्कार्यसाधनत्वेन प्रसिद्धं यज्जगत्तले ।
तत्तद्विरुद्धकार्यस्य येन केनापि साधनम् ॥
क्रियेत यदि तत्राद्यो व्याघातः परिकीर्तितः ।

कुसुमैः प्रीयते लोको हन्ति तैरेव तं स्मरः ।

**यत्कार्यसाधनत्वेन चैकेनोपात्तवस्तु च ॥**
**तत्प्रतिद्वन्द्विनान्येन तद्विरुद्धस्य साधनम् ।**
**क्रियेत चेद्द्वितीयस्तु व्याघातः परिकीर्तितः ॥**

दिट्ठिविअग्घं मअणं जा दिट्ठिआ एव्व जिव्वेन्दि[1] ।
सुविरुव्वअक्खधिकिइणिवुणाणं करेम्हि खु त्थुइं तासम् ॥१३२॥

**विशेषकार्यनिष्पादकतया येन केनचित् ।**
**संभाव्यमानादर्थाच्च सौकर्येण समर्थ्यते ॥**
**तद्विरोधिक्रियान्येन चेद्व्याघातोऽपरो मतः ।**

दारिद्र्यशङ्कामासाद्य मैवं दानपरो भव ।
तामेव शङ्कामासाद्य तात दानपरोऽस्म्यहम् ॥ १३३ ॥

(अथाल्पम्—)

**अल्पं तु सूक्ष्मादाधेयादाधारस्यातिसूक्ष्मता ॥**

कनिष्ठिकोर्मिकां कान्ता कण्ठाभरणमातनोत् ।

(अथ विशेषः—)

**विना प्रसिद्धमाधारमाधेयस्य व्यवस्थितेः ।**

कथनं प्रथमान्यत्र विशेषालंकृतिर्मता ।
विना कासारमम्भोजं पश्य विद्युति राजते ॥ १३४ ॥

**व्यत्यासोऽन्यो विशेषः स्यादाधाराधेययोर्यदि ॥**

कुसुमेषु भ्रमराणां स्थितिरिह दृष्टा न चालिषु सुमानाम् ।
अधुनालकमधुपालौ दृष्टा कुसुमस्थितिः सरोजाक्ष्याः ॥ १३५ ॥

**अप्रकल्प्यान्यदाधारं प्रसिद्धाधारमन्तरा ।**
**स तृतीयो विशेषश्चेदाकल्पं कथ्यते स्थितिः ॥**

प्राचीनम्—

दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ।
रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः ॥ १३६ ॥

---

1. 'दृष्टिविदग्धं मदनं या दृष्ट्यैव जीवयन्ति ।
सुविरूपाक्षधिकृतिनिपुणानां कुर्मः खलु स्तुतिं तासाम् ॥' इति च्छाया.

चतुर्थोऽपि विशेषश्चेदनेकत्रैकवर्णनम्।
यत्र यत्र गता दृष्टिस्तत्र तत्रापि सैव मे।
एकस्यारम्भतोऽशक्यकार्यान्तरकृतिश्च सः॥
विद्वंस्त्वां पश्यता लब्धं कमलाकान्तवीक्षणम्॥ १३७॥

(अथान्योन्यम्—)

परस्परोपकारस्य कथनेऽन्योन्यमिष्यते।
लक्ष्म्या विराजते राजा राज्ञा लक्ष्मीर्विराजते।

(अथ कारणमाला—)

पूर्वपूर्वं क्रमेणोत्तरोत्तरं प्रति हेतुताम्।
भजते यदि संप्रोक्ता तदा कारणमालिका॥
सद्विद्यया नयोत्कर्षो नयोत्कर्षेण संपदः।
संपद्भिर्भवति त्यागस्त्यागेन विपुलं यशः॥ १३८॥

तथोत्तरोत्तरं पूर्वपूर्वकारणतां यदि।
लभते चेद्द्वितीया तु तदा कारणमालिका॥
भवति त्रिदिवः पुण्यात्पुण्यमैश्वर्यतो भवेत्।
ऐश्वर्यं दानतो दानं वैराग्यात्तत्सुसङ्गतः॥ १३९॥

(अथैकावली—)

विशेषणत्वकथनं पूर्वपूर्वान्प्रति क्रमात्।
यत्रोत्तरोत्तरेषां चेदियमेकावली मता॥
राधामुखं चन्द्रसारं चन्द्रो माधववक्त्रभाः।
माधवः कामसदृशः कुशलाय सदा मम॥ १४०॥

पूर्वपूर्वेषां तथोत्तरोत्तरं प्रति च क्रमात्।
विशेषणत्वकथनं द्वितीयैकावली मता॥
कान्तामुखाभं यत्तस्य यो वैरी स यदुद्भवः।
तं योऽकरोत्तस्य मूलं यस्तन्नेत्रः स पातु वः॥ १४१॥
प्रथमैवापोहिता चेत्तृतीयैकावली मता।

न तद्राज्यं प्रजा यत्र न संतुष्टा न ताः प्रजाः ।
यासां न सुप्रभुर्नायं सुप्रभुर्न हरिर्हृदि ॥ १४२ ॥

(अथ यथासंख्यम्—)

**पूर्वोद्दिष्टपदार्थानां पश्चादपि यथाक्रमम् ।**
**अनूद्देशो भवेत्तत्र यथासंख्यं प्रकीर्तितम् ॥**

प्राचीनम्—

वीटीकराग्रा विरहातुराङ्गी चेटीमवादीदिह चित्तजेषुः ।
प्राणप्रियो जीवितमर्धरात्रोऽप्यायाति नायाति न याति याति ॥१४३॥

**क्रमालंकारमेतच्च केचिदूचुर्विपश्चितः ।**

(अथ मालादीपकम्—)

**दीपकैकावलीयोगश्चेन्मालादीपकं मतम् ॥**

संपत्तिर्वसुधां प्राप्ता वसुधा कृष्णभूभृतम् ।
कृष्णभूभृद्यशोराशिं यशोराशिर्जगत्त्रयम् ॥ १४४ ॥

(अथ पर्यायः—)

**एकस्य वस्तुनोऽनेकेष्वाधारेषु प्रवर्तनम् ।**
**क्रमेणैकैकसंत्यागात्पर्यायः प्रथमो मतः ॥**

आदौ पृथ्वीकिटेर्दंष्ट्रां ततः फणिपतेः शिरः ।
त्रेतायां रामदोर्दण्डं पश्चाद्यौधिष्ठिरीं भुजाम् ॥ १४५ ॥

**आधारेष्वनेकेषु तथैकस्य प्रवर्तनम् ।**
**पर्यायोऽपि द्वितीयः स्यादेकैकत्यागतः क्रमात् ॥**

ओष्ठ एव पुरा राग इदानीं हृदि दृश्यते ।

**इमं विकासपर्यायाभिधं केचित्प्रचक्षते ।**
**एकस्मिन्नेव चाधारेऽनेकाधेयप्रवर्तनम् ।**
**पर्यायेण तृतीयश्चेत्पर्यायः परिकीर्तितः ॥**

बाल्यमादौ वयः पश्चादधुना स्थाविरं तयोः ॥ १४६ ॥

(अथ परिवृत्तिः—)

**समाधिकानां न्यूनानां समन्यूनाधिकैः समम् ।**
**यदा विनिमयस्तत्र परिवृत्तिरलंकृतिः ॥**

प्रीतिं दत्त्वा सरोजाक्षी जगृहे कामिनो मनः ।
तुलसीमञ्जरीमेकां दत्त्वा भेजुर्हरेः कृपाम् ।
दत्त्वा सुधामुचो वाचः कविर्भेजे कपर्दिकाम् ॥ १४७ ॥

(अथ परिसंख्या—)

**एकस्य वस्तुनः प्राप्तिरनेकत्रैकदा यदि ।**
**निषिध्यैकत्र चान्यत्र परिसंख्या नियन्त्रणम् ॥**
**सा तु द्विधा मता प्रश्नपूर्विकाप्रश्नपूर्विका ।**
**निषेधस्यापि शाब्दत्वार्थत्वाभ्यां ते द्विधा पुनः ॥**
**अश्लिष्टश्लिष्टभेदेन सर्वा अपि पुनर्द्विधाः ।**
**एवं चाष्टविधा प्रोक्ता परिसंख्या मनीषिभिः ॥**

कः कटुभावं भेजे दुर्जननिकरो न पारिभद्रतरुः ।
किं क्रूरं जगति भृशं पतिसुतहीनाङ्गनाहृदयम् ॥ १४८ ॥
हृदयं भगवति सुधियो न तु परतरुणीभकुम्भकुचभारे ।
सुमनोजननिचयानां स्तुतिरपि कमलापतेश्चरण एव ॥ १४९ ॥
कस्योपपत्यभावः स्त्रैणस्य न तु सुधीकदम्बस्य ।
कुत्र च विषमहितत्वं कमलाकर एव रामराज्यभरे ॥ १५० ॥
अविहतवीराभिमता द्युमणिपुरी नापि रामराजपुरी ।
सन्मालागुणभङ्गस्त्वधरप्रीतिः सुरत एव ॥ १५१ ॥

(अथ समुच्चयः—)

**गुणक्रियोभयेषां वा यौगपद्यं समुच्चयः ।**

माधव तव दयितेयं विरहपरीवाहविप्लुता सुतनुः ।
अलसा मलिना दीना विवशा शुष्का निरीक्षते मार्गम् ॥ १५२ ॥
किं चास्याः शृणु वृत्तं माधव यमुनातटीनिकुञ्जेषु ।
विलुठति ताम्यति शेते भ्राम्यति नितरां मुहुर्मुहुः श्वसिति ॥ १५३ ॥

---

१. उपपतेर्जारस्य, उपपत्तेर्युक्तेः. २. विषैर्मृणालैर्महितत्वं, विषमाणां दुर्जनानां हितत्वं च. ३. 'न विमुखं (अर्थात्संमुखं) हतैर्वीरैः,' अविभिर्मेषैर्हतैमारितैर्वीरैः, मारित्तमेषकैर्वा. ४. सतो मालागुणस्य, सुधीश्रेणिगुणस्य, ५. अधरे नीचे ओष्ठे च.

धावति मुहुरुत्कम्पं व्याकुलतारं समीक्षते भूयः ।
प्रलपति विस्खलदक्षरमुदयद्दैन्यं तनोति सा चेष्टाः ॥ १५४ ॥

**केचित्तु भिन्नविषयेऽप्येनमाहुः समुच्चयम् ॥**

माधवः प्रेक्षते राधां कन्दर्पो विशति स्वयम् ।

**अहंप्रथमिकाभाजां बहूनां कार्यसाधने ।**
**कारणानां समुद्योगः स द्वितीयः समुच्चयः ॥**

विनयो दक्षता त्यागो माधुरी चातुरी धनम् ।
विद्या वयः कुलं रूपमुत्तमं कथयन्ति तम् ॥ १५५ ॥

(अथ विकल्पः—)

**विकल्पस्तुल्यबलयोर्विरोधः कथ्यते यदि ।**

कौरवाः क्रियतां मूर्धा धनुषां वा विनम्रता ।

(अथ समाधिः—)

**एककार्यस्य सौकर्यं कारणान्तरसंनिधेः ।**
**काकतालीयनियमात्समाधिस्तत्र कीर्त्यते ॥**

मानं तस्याः परीहर्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दैवेन हिमांशुरुदयं गतः ॥ १५६ ॥

(अथ सारः—)

**उत्तरोत्तरमुत्कर्षः सारालंकार उच्यते ।**

सुन्दरी शारदा तस्याः पद्मा तस्याश्च राधिका ।

**उत्तरोत्तरमश्लाघ्यगुणोत्कर्षोऽप्यसौ मतः ।**

प्राचीनम्—

तृणाल्लघुतरस्तूलस्तूलादपि च याचकः ।
वायुना किं न नीतोऽसौ मामयं प्रार्थयेदिति ॥ १५७ ॥

(अथ कारकदीपकम्—)

**एककारकगानां तु क्रियाणां कालभेदतः ।**
**गुम्फनं क्रियते यत्र तत्र कारकदीपकम् ॥**

निवारितोऽपि शतशो याचको धनिनां भटैः।
गच्छत्यागच्छति पुनर्द्वारे तिष्ठति पृच्छति॥ १५८॥

(अथ काव्यार्थापत्तिः—)

**कैमुत्येनार्थनिष्पत्तिः काव्यार्थापत्तिरीरिता।**
स मागधो जितस्तेन का वार्तान्यमहीभृताम्।

(अथोल्लासः—)

**एकस्य वस्तुनो यत्र गुणेनान्यस्य वस्तुनः।**
**गुणस्य वर्णने तस्मिन्नुल्लासः प्रथमो मतः॥**
यदयं तादृशीं राधां सेवते नन्दनन्दनः।
एको धन्यतमो नूनमितरे तु भुवो भरः॥ १५९॥

**एकस्य वस्तुनो यत्र दोषेणान्यस्य वस्तुनः।**
**दोषस्तु वर्ण्यते तत्र द्वितीयोल्लास इष्यते॥**
चन्दन नन्दन मा कुरु वासं व्याप्ते वनेऽत्र दुर्वंशैः।
तेऽन्योन्यघर्षणाग्निस्पृष्टाः सर्वं दहेयुरिह दावम्॥ १६०॥

**गुणेन दोषकथने तृतीयोल्लास इष्यते।**
तदभाग्यं धनस्यैव यन्नाश्रयति सज्जनम्।
**उल्लासस्तु चतुर्थः स्याद्दोषेण गुणवर्णने॥**
त्यक्तोऽसि मर्कटेनेति मा व्यथां कुरु सन्मणे।
लाभोऽयमेव ते यस्माच्चूर्णितोऽसि न चाश्मना॥ १६१॥

(अथ प्रत्यनीकम्—)

**प्रतिपक्षस्य बलिनः प्रतीकारेऽतिदुष्करे।**
**तत्पक्षस्य तिरस्कारः प्रत्यनीकमितीष्यते॥**
माधवेन जितः कामो बाधते राधिकां मुहुः।

(अथ विकस्वरः—)

**समर्थनार्थं विन्यस्य विशेषार्थस्य कस्यचित्।**
**सामान्यं तत्प्रसिद्ध्यर्थमुपमानतया तथा॥**

**अथ वार्थान्तरन्यासविधया कथ्यते यदि ।**
**पुनर्विशेषान्तरं चेत्तत्र प्रोक्तो विकस्वरः ॥**

अनेकविद्यानिपुणस्य तस्य संगीतराहित्यमभून्न हान्यै ।
एको हि दोषः सुगुणेषु मग्नो भवेत्सुधांशोः किरणेष्विवाङ्कः ॥१६२॥

रे व्यासटि त्वं भज वाजिशालां मौनेन घोटीं मनुते जनस्त्वाम् ।
स्थानप्रभावेन हि वस्तु धन्यं को नाह चित्रं नृपफालपङ्कम् ॥ १६३ ॥

(अथ मिथ्याध्यवसितिः—)

**वस्तुनः कस्यचिद्यत्रात्यन्तमिथ्यात्वसिद्धये ।**
**मिथ्याध्यवसितिर्मिथ्याभूतार्थान्तरकल्पनम् ॥**

दुष्कीर्तिर्बधिरश्राव्या मूकगेयास्य भूभुजः ।

(अथ काव्यलिङ्गम्—)

**काव्यलिङ्गं हेतुना स्यात्समर्थ्यसमर्थनम् ।**
**वाक्यार्थत्वे पदार्थत्वे हेतोर्द्वैविध्यमिष्यते ॥**

जितोऽनया स्मरो नूनं यामालिङ्गति वल्लभः ।
कन्दर्पमजयद्विप्रस्त्रिनेत्राक्रान्तमानसः ॥ १६४ ॥

(अथ संभावना—)

**एकार्थस्य सिद्ध्यर्थं (?) तर्कः संभावना मता ।**

पश्येयं तेऽङ्गसौन्दर्यं यद्यहं स्यां पुरंदरः ।

(अथावज्ञा—)

**अवज्ञैकगुणेनान्यगुणालाभे प्रकीर्तिता ।**

कस्तूरिकामपि प्राप्य न सुगन्धिः सुकन्दकः ।

**अन्यावज्ञैकदोषेणान्यदोषालाभ ईरिता ॥**

नीचानामपुरस्कारे लघुता सज्जनस्य का ॥ १६५ ॥

(अथार्थान्तरन्यासः—)

**अप्रस्तुतविशेषार्थान्तरन्यसनपूर्वकम् ।**
**सामान्यप्रस्तुतस्यार्थान्तरन्यासः समर्थनम् ॥**

प्राचीनम्—

ताद्दशां ताद्दशैरेव संबन्धो भुवि शोभते।
विषाननपरिष्वङ्गो विषकण्ठस्य भूषणम्॥ १६६॥

**विशेषस्य प्रस्तुतस्य सामान्येन समर्थनम्।**
**द्वितीयोऽर्थान्तरन्यासः क्रियते प्रस्तुतेन चेत्॥**

अस्तमिते खरकिरणे तमसा क्रान्तं जगत्तु बहुशोऽभूत्।
निजशत्रोर्हि परोक्षे लोकः सर्वोऽपि वृद्धिमभियाति॥ १६७॥

**कार्यकारणभावेन प्रस्तुतार्थसमर्थनम्।**
**तृतीयार्थान्तरन्यासं केचिदूचुर्विपश्चितः॥**

प्राचीनम्—

भूपाः प्रतापरुद्रस्य नता भवत नोन्नताः।
उन्नतान्नमयत्येष नतानुन्नमयत्यपि॥ १६८॥

(अथ प्रौढोक्तिः—)

**उत्कर्षाकारणे यत्रोत्कर्षहेतुत्वकल्पनम्।**
**क्रियते तत्र विद्वद्भिः प्रौढोक्तिरिति कीर्तिता॥**

भ्रामं भ्रामं मुधा कान्ते व्यापारयसि किं मयि।
नेत्रं कलिन्दकन्याम्भः पुष्टनीलोत्पलच्छवि॥ १६९॥

(अथ ललितम्—)

**प्रस्तुते वर्ण्यमानार्थप्रतिबिम्बस्य चेद्यदि।**
**वृत्तान्तस्याप्रस्तुतस्य वर्णनं ललितं मतम्॥**

क्व ताद्दशी कुलवधूः क्व चायं दुर्भगः पुमान्।
पङ्गुः शृङ्गं समुत्तुङ्गं मेरोरारोढुमिच्छति॥ १७०॥

(अथानुज्ञा—)

**दोषस्यैवार्थनानुज्ञा तत्रैव गुणदर्शनात्।**

मम दारिद्र्यमेवास्तु याचको यन्न बाधते।

(अथोदात्तम्—)

**चरितं श्लाध्यमन्याङ्गं चेदुदात्तमलंकृतिः।**

वयस्य पश्य यमुना सा वरीवर्तते पुरः ।
यत्तटीकुञ्जपुञ्जेषु रेमे राधिकया हरिः ॥ १७१ ॥

**ऋद्धं चेद्वर्ण्यते वस्तु द्वितीयोदात्तमिष्यते ॥**

द्वारकायां सुधीगेहप्राङ्गणोत्सृष्टमौक्तिकाः ।
कपोती ग्रसते यत्तत्त्यागलीलायितं विधोः ॥ १७२ ॥

(अथ लेशः—)

**गुणे दोषत्वस्य दोषे गुणत्वस्य च कल्पनम् ।**
**यदि स्यात्तत्र विद्वद्भिर्लेशालंकृतिरुच्यते ॥**

गुणवन्तः क्लिश्यन्ते गुणलवविधुरास्तु सर्वदा सुखिनः ।
बध्यन्ते मधुरगिरः कीराः काकास्तु कामसंचाराः ॥ १७३ ॥

(अथ प्रहर्षणम्—)

**अपेक्षितार्थसिद्धिश्चेद्विना यत्नं प्रहर्षणम् ।**

राधिकासंगमोपायचिन्तां कुर्वति माधवे ।
स्वयमेवागता सा तमालिलिङ्ग मुदा तदा ॥ १७४ ॥

**अपेक्षिताधिकार्थस्य सिद्धिश्चान्यत्प्रहर्षणम् ॥**

याचते घटिकामेकां राधां सङ्गसुखं हरिः ।
अहोरात्रं सहानेन सापि रेमे मनस्विनी ॥ १७५ ॥

**फलस्योपायसिद्ध्यर्थं प्रयत्ने च कृते सति ।**
**तदैव फललाभश्चेत्तृतीयं स्यात्प्रहर्षणम् ॥**

राधिकानयनार्थाय दूतीमन्वेष्टुमुद्यतः ।
मध्येमार्गं नन्दसूनू राधिकामेव दृष्टवान् ॥ १७६ ॥

(अथ विषादनम्—)

**अपेक्षितविरुद्धार्थप्राप्तिश्चेत्स्याद्विषादनम् ।**

कमलोदरमकरन्दं दूरादागत्य संभ्रमाद्भ्रमरे ।
आघ्रातुमुद्यतेऽस्मिन्हन्त तदानीं तदुज्जहार करी ॥ १७७ ॥

(अथ मुद्रा—)

**सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरात्पदात् ।**

मालतीकुसुमामोदबन्धुरैषा वनस्थली।

**न्यसनं प्रकृतार्थानां प्रसिद्धक्रमतो यदि।**
**उदिता तत्र विद्वद्भी रत्नावलिरलंकृतिः॥**

गद्यम्—

सुरारिरयं कृतघनपुष्पमालाविलासः कृतभू[1]भरणो भूदारो हिर[2]ण्यकशिपुक्षेत्रदाता अपहृतब[3]लिपरसंपत्तिः प[4]रशुभोल्लसितः परितोषितज[5]नकतनयो य[6]शोदयाहृतवपुः श्रीघ[7]नजनस्तुतः क[8]विकालसद्भूषणकरो माधवोऽरुणेनाधरबिम्बेन, कलानिधिना मुखेन, सुमङ्गलेन मधुरवचसा, प्रहर्षणेन विभ्रमेण, गुरुणा स्तनभारेण, कविस्तुत्येन शीलेन, मन्देन गमनेन, विकचेन नयनोत्पलयुगलेन, तमोरुचिरेण कचनिचयेनोद्भासमानां रुक्मद्युतिरमणीयां रुक्मिणीमवलोकयामास।

**न्यसनं सह पाठानामक्रमेणापि सा मता।**

गुरुणा स्तनभारेण हासेन श्वेतरोचिषा।
गमनेन सुमन्देन रेजे ग्रहमयीव सा॥ १७८॥

(अथ पूर्वरूपम्—)

**पुनः स्वीयगुणत्यागानन्तरं स्वगुणग्रहः।**
**कथ्यते यत्र तत्रोक्ता पूर्वरूपमलंकृतिः॥**

राधिकानासिकामुक्ता लोहितान्यधरत्विषा।
पुनः स्वां रुचमानिन्ये सितेन स्मितरोचिषा॥ १७९॥

---

१. भरणं पोषणं धारणं च; एतेन वराहावतारनिष्पत्तिः. २. सुवर्णभोजनाच्छादनभूमीनां दाता, हिरण्यकशिपुनामकदैत्यस्य विदारकः; एतेन नृसिंहावतारनिष्पत्तिः. ३. बलिनां परेषाम्, बलिनामकस्य परा; एतेन वामनावतारनिष्पत्तिः. ४. परेण शुभेन उल्लसितः, परशुशस्त्रस्य भया कान्त्योल्लसितः; एतेन परशुरामावतारवर्णनम्. ५. जनकस्तनयश्च, जनकनाम्नस्तनया; एतेन रामावतारनिष्पत्तिः. ६. यशसा दयया च, यशोदयया वा; एतेन कृष्णावतारवर्णनम्. ७. श्रिया घनैः पूर्णैर्जनैः, श्रीघन इति जनैः स्तुतः; एनेन बुद्धावतारवर्णनम्. ८. कवीनां काले समये दानार्थं सद्भूषणः करो यस्य, कविकैव लसद्भूषणं यस्मिंस्तादृक्करो यस्य; एतेन कल्क्यवतारवर्णनम्. ९. अरुणादिपदानां सूर्यादिपरत्वेन सर्वेषामङ्गानां ग्रहमयत्वं व्याख्येयम्.

**पूर्वावस्थानुवृत्तिश्च विगते सति वस्तुनि ।**
**कथ्यते चेद्द्वितीयं तु पूर्वरूपमुदाहृतम् ॥**

प्राचीनम्—

व्याख्याता स निशि कदाचन प्रदीपे
संशान्ते पुनरपि वाचयांबभूव ।
शिष्यान्स्वान्पुरुकरुणाम्बुधिर्निजाङ्घ्रे-
रङ्गुष्ठस्फुटनखरान्तरोचिषैव ॥ १८० ॥

(अथ तद्गुणः—)

**तद्गुणः स्वगुणत्यागानन्तरान्यगुणग्रहः ।**
अधरप्रभया कान्तानासामुक्तारुणाभवत् ।

(अथ मीलितम्—)

**मीलितं यत्र सादृश्याद्भेद एव न लक्ष्यते ॥**
नालक्षि कज्जलं नेत्रे नीलोत्पलदलप्रभे ॥ १८१ ॥

(अथातद्गुणः—)

**अतद्गुणः संगतान्यगुणास्वीकार उच्यते ।**
घनमण्डलसक्तापि ते कीर्तिः शशिसच्छविः ।

(अथानुगुणः—)

**पूर्वस्थितस्वीयगुणोत्कर्षश्चेदन्यवस्तुनः ।**
**संनिधानवशात्तत्रानुगुणालंकृतिर्मता ॥**
लभते रक्तिमोत्कर्षं लीलाम्भोजं करांशुभिः ॥ १८२ ॥

(अथ सामान्यः—)

**व्यावर्तको विशेषश्चान्योन्यं यत्र न लक्ष्यते ।**
**सादृश्यात्तत्र सामान्यमलंकारं विदुर्बुधाः ॥**
कीर्तावुज्जृम्भितायां ते जनैर्नालक्षि जाह्नवी ।

(अथ पिहितम्—)

**पिहितं चेत्परोदन्तं ज्ञात्वा साकूतचेष्टया ।**
**प्रकाशस्तत्पुरस्तस्या गूढस्य क्रियते यदि ॥**
तल्पं सा कल्पयामास प्रेयसि प्रातरागते ॥ १८३ ॥

(अथोन्मीलितम्—)

**भेदानध्यवसाये च सादृश्यात्सति कारणात् ।**
**कुतोऽपि हेतोर्भेदस्य स्फूर्तावुन्मीलितं मतम् ॥**

बालापादतले सक्तं यावकं सहजारुणे ।
आर्द्रत्वेनैव जानन्ति स्पर्शं स्पर्शं सखीजनः ॥ १८४ ॥

(अथोत्तरम्—)

**गूढाभिप्रायसहितोत्तरमुत्तरमिष्यते ।**
**तद्विधोन्नेयसंबन्धप्रश्नोत्तरविभेदतः ॥**

भवने बान्धवाः सन्ति पान्थ किंचिन्न विद्यते ।
गोष्ठीने तमसाक्रान्ते सुखं वससि चेद्वस ॥ १८५ ॥

प्राचीनम्—

कुशलं तस्या जीवति कुशलं पृच्छामि जीवतीत्युक्तम् ।
पुनरपि तदेव कथयसि मृतां नु कथयामि या श्वसिति ॥ १८६ ॥

(अथ सूक्ष्मम्—)

**विदग्धमात्रज्ञेयं चेत्सूक्ष्मं साकूतचेष्टितम् ।**

पश्यन्त्यां मयि साकूतं सखी गोष्ठीनियन्त्रिता ।
तरलं गोपयामास सस्मितं तरुणीमणिः ॥ १८७ ॥

(अथ भाविकम्[1]—)

**प्रत्यक्षत्वेन कथनमतीतार्थस्य भाविकम् ॥**

अद्यापि तन्मम दृशोर्धुरि वर्तते य-
द्रात्रौ मयि क्षुतवति क्षितिपालपुत्र्या ।
जीवेति मङ्गलवचः परिहृत्य वेगा-
त्कर्णेऽपि तं कनकपत्रमनालपन्त्या ॥ १८८ ॥

**द्वितीयं भाविकं भूतं मानसत्वेन वर्ण्यते ।**

हृद्यद्यापि वरीवर्ति राधा यदकरोद्रते ।

---

१. 'उन्मीलितोत्तरे सूक्ष्मं विशेषो भाविकं तथा ।' इत्यलंकारोद्देशग्रन्थे तु भाविकात्माविशेषक उक्तः.

(अथ विशेषकः—)

सदृशानां च वस्तूनां येनकेनापि हेतुना ।
व्यावर्तकविशेषस्य स्फुरणे स्याद्विशेषकः ॥
काकः कृष्णः पिकः कृष्णः को भेदः पिककाकयोः ।
प्राप्ते वसन्तसमये काकः काकः पिकः पिकः ॥ १८९ ॥

(अथ व्याजोक्तिः—)

यया कयापि हेतूक्त्या प्राप्ताकारस्य गोपनम् ।
स्वस्याथ वा परस्यापि व्याजोक्तिः क्रियते यदि ॥
ओट्ठम्मि वि त्थणतडम्मि परिक्खदा वि
लालेसि किंचि हलिणाछि सुअं सुवंकम् ।
दट्ठूण तुज्झ पइणो हिअअम्मि रोसो
संवड्ढइ प्पअडदो तुइ जालिणित्ति ॥ १९० ॥

(अथ विवृतोक्तिः—)

श्लिष्टं च गुप्तमर्थं तु यद्याविष्कुरुते कविः ।
यथाकथंचित्तत्र स्याद्विवृतोक्तिरलंकृतिः ॥
भ्राम्यति स्फारमुद्याने भ्रमरो रमणादरः ।
सखीसमाजगामेवं वक्ति सा साक्षिसूचनम् ॥ १९१ ॥

(अथ गूढोक्तिः—)

यत्रान्योद्देशकं वाक्यं यदन्यं प्रतिकथ्यते ।
किंचिच्छ्लेषेण चेत्तत्र स्याद्गूढोक्तिरलंकृतिः ॥
सदा रामान्तरपृथुलकुचग्रहणोद्यमम् ।
वत्स मा कुरु चौर्येण बली जागर्ति तत्पतिः ॥ १९२ ॥

(अथ युक्तिः—)

यया कयापि क्रियया परेषां वञ्चनं यदि ।
परस्य स्वस्य वा मर्मगुप्त्यै युक्तिरलंकृतिः ॥

---

१. 'ओष्ठेऽपि स्तनतटेऽपि परिक्षतापि लालयसि किमिति हरिणाक्षि शुकं सुवक्रम् । दृष्ट्वा तव पत्युर्हृदये रोषः संवर्धते प्रकटतस्त्वयि जारिणीति ॥' इति च्छाया.

त्वामालिखन्तीं कञ्जाक्ष ननन्दां वीक्ष्य राधिका ।
अलिखच्चतुराह्वाय कौसुमं कार्मुकं करे ॥ १९३ ॥

(अथ लोकोक्तिः—)

**लोकवादानुकरणं लोकोक्तिर्यदि कथ्यते ।**

अनुसरति तव ननन्दा नन्दकुमारं परापि सानन्दा ।
तव किं नीरजनयने पश्य मुदोन्मील्य माधवं नयने ॥ १९४ ॥

(अथ च्छेकोक्तिः—)

**अभिप्रायविशेषस्य व्यञ्जकत्वं यदा भवेत् ।**
**लोकोक्तेरेव तत्र स्याच्छेकोक्तिः परिकीर्तिता ॥**

पादचार्येव जानीते शिलाशकलमार्दवम् ।

(अथ स्वभावोक्तिः—)

**स्वभावोक्तिर्यथा चारु यथावद्वस्तुवर्णनम् ।**

अंशुके कुचतटाद्गलितेऽभूत्स्वस्तिकाकलितकान्तकुचान्ता ।
उन्नमय्य चिबुकाञ्चितहस्तं ह्रीनमद्वदनमक्षि चुचुम्ब ॥ १९५ ॥

(अथ वक्रोक्तिः—)

**एकार्थेनोक्तवाक्यस्य काका श्लेषेण वान्यथा ।**
**योजनं क्रियते यत्र वक्रोक्तिस्तत्र कीर्तिता ॥**

प्राचीनम्—

असमालोच्य कोपस्ते नोचितोऽयमितीरिता ।
नैवोचितोऽयमिति तं ताडयामास मालया ॥ १९६ ॥
तरणिं पश्य सुश्रोणि कान्त कुत्रास्ति नौरिह ।
सवितारं प्रिये वच्मि स्वगृहे वर्तते पिता ॥ १९७ ॥

(अथ चित्रम्—)

**चित्रं निबध्यते यत्र प्रश्नभिन्नोत्तरं तदा ।**

शालेः कासारवत्युर्वी पथिकस्य हृतं धनम् ।

---

१. 'शालेः सारवत्युर्वी का' इति प्रश्ने 'कासारवती' इत्युत्तरम्. २ 'कस्य धनं पथि हृतम्' इति प्रश्ने 'पथिकस्य' इत्युत्तरम्.

(अथ प्रतिषेधः—)

**प्रतिषेधः प्रसिद्धस्य निषेधः कविरञ्जकः ।**

नैवेयं खुरली धूर्त विदुषां वर्तते सभा ॥ १९८ ॥

(अथ विधिः—)

**सिद्धस्यैव पदार्थस्य विधानं चेत्तदा विधिः ।**

सभायां शास्त्रगोष्ठीषु विद्वान्विद्वान्भवेत्सखे ।

(अथ निरुक्तिः—)

**हेतुना येन केनापि योगेनान्वर्थता यदि ।**
**नाम्नां चेत्कल्प्यते यत्र निरुक्तिस्तत्र कीर्तिता ॥**

यद्गर्भात्कन्यकारत्नं लेभे जनकभूपतिः ।
तस्मादस्या भुवो नाम रत्नगर्भेति सार्थकम् ॥ १९९ ॥

(अथ हेतुः—)

**कार्येण साकं हेतोश्चेद्वर्णनं हेतुरुच्यते ।**

प्राचीनम्—

एष ते विद्रुमच्छायो मरुमार्ग इवाधरः ।
कस्य नो तनुते तन्वि पिपासाकुलितं मनः ॥ २०० ॥

**केचित्प्रचक्षते हेतुं हेतुकार्यैक्यवर्णनम् ।**

दुर्जनानामर्चनैव गाम्भीर्यं विदुषां महत् ।

**प्रश्नं चापि तथात्युक्तिं केचिदूचुरलंकृतिम् ॥**

(अथ प्रश्नः—)

**प्रश्नः सगूढाकूतश्चेद्बध्यते प्रश्न इष्यते ।**

भो पान्थ पुस्तकधर क्षणमत्र तिष्ठ
वैद्योऽसि किं गणकशास्त्रविशारदोऽसि ।
केनौषधेन मम पश्यति भर्तुरम्बा
भर्तागमिष्यति कदा बहुदूरवासी ॥ २०१ ॥

(अथात्युक्तिः—)

**अद्भुतासत्यकथनं मतात्युक्तिरलंकृतिः ॥**

त्वत्प्रतापाग्निना सप्त सागरा अपि शोषिताः ।
पुनस्त्वद्वैरिकान्ताक्षिवारिभिः परिपूरिताः ॥ २०२ ॥

(अथ रसवान्—)

**रसो यत्र परस्याङ्गं स्यात्तत्र रसवान्मतः ।**

जीयात्स भूदाररूपी महात्मा जगतां पतिः ।
आतपत्रश्रियं धत्ते दंष्ट्राग्रे यस्य मेदिनी ॥ २०३ ॥

**भावः परस्य चाङ्गं चेत्प्रेयोऽलंकार इष्यते ॥**

कदा मुदा सामिविलोचनान्तं व्यापारयन्तीं कुटिलालकान्ताम् ।
आलिङ्ग्य कान्तां कुचभारतान्तां चुम्बामि बिम्बाधरमम्बुजाक्षीम् ॥ २०४ ॥

(अथोर्जस्वित्—)

**रसाभासः परस्याङ्गं चेदूर्जस्विदलंकृतिः ।**

स जीयादप्रतिद्वन्द्वो राजा यद्विषदङ्गना ।
आलिङ्गत्यसकृत्प्रेम्णा पुलिन्दं विन्ध्यभूमिषु ॥ २०५ ॥

**भावाभासः परस्याङ्गं चेदप्यूर्जस्विदिष्यते ॥**

स्वस्ति तेऽस्तु महीपाल वने त्वद्रिपुकामिनी ।
पुलिन्दतरुणान्वीक्ष्य सव्रीडस्मितमातनोत् ॥ २०६ ॥

(अथ समाहितम्—)

**भावशान्तिः पराङ्गं चेत्समाहितमलंकृतिः ।**

स भूयान्मम रक्षायै यस्य प्रत्यर्थिनां मुखे ।
रणाङ्गणे तृणं वीक्ष्य दृक्कोणं शोणिमात्यजत् ॥ २०७ ॥

(अथ भावोदयः—)

**भावोदयः पराङ्गं चेद्भावोदय इतीरितः ॥**

कटाक्षान्किरति प्रेम्णा सा बाला मयि या पुरा ।
किमिदं कुचयोरालीत्युक्ता जाता नतानना ॥ २०८ ॥

(अथ भावसंधिः—)

**भावसंधिः पराङ्गं चेद्भावसंधिरलंकृतिः ।**

संग्रामपटहारावैः कान्तालिङ्गनसंभ्रमैः ।
पुलकाङ्कितसर्वाङ्गः सोऽग्रहीत्तत्क्षणं धनुः ॥ २०९ ॥

अथ भावशाबल्यम्—)

**भावशाबल्यमन्याङ्गं भावशाबल्यमिष्यते ॥**

मनोजात त्वं मां व्यथयसि नताङ्गीं किमु वृथा
पुरारातिं शीघ्रं व्रज गतदयं मर्दय शरैः ।
यदि स्याच्चातोऽसावहमपि तदा तेऽस्मि जननी
सपत्नीमातुस्तेऽहमिति यदि कृष्णाय कथये ॥ २१० ॥

(अथ प्रत्यक्षम्—)

**संनिकर्षभवं चारु ज्ञानं प्रत्यक्षमुच्यते ।**

इयं मदनमानिनी किमुत कामिनी वज्रिणो
गिरीशवरसुन्दरी किमु मृगाङ्ककान्ताथ वा ।
इति व्रजजनश्चिरं मनसि हन्त संशय्य तां
समीपभुवि राधिकां सपदि निश्चिकाय स्फुटम् ॥ २११ ॥

(अथानुमानम्—)

**हेतुसाध्यविनिर्देशे त्वनुमानमलंकृतिः ॥**

भ्रूचापवल्ली किल भाति यस्मिन्निन्दीवराशालदृगाशु गोपि ।
भुजध्वजाग्रे मकरोऽपि यस्मान्मन्ये तदङ्गं स्मरराट् शताङ्गम् ॥२१२॥

(अथोपमानम्—)

**उपमानं चातिदेशवाक्यार्थज्ञानमिष्यते ।**

प्राचीनम्—

तां रोहिणीं विजानीहि ज्योतिषामत्र मण्डले ।
यस्तन्वि तारकान्यासः शकटाकारमाश्रितः ॥ २१३ ॥

(अथ शब्दः—)

**प्रमाणत्वेन वेदादिवर्णने शब्द इष्यते ॥**

सखि मा कुरु शीतांशौ दोषारोपं मनस्विनि ।
मुरारेर्मानसं सूनुं यमाहुः श्रुतिराशयः ॥ २१४ ॥

(अथार्थापत्तिः—)

**अन्यथानुपपत्त्या च यत्र वस्तुव्यवस्थितेः।**
**निर्धारणं पुनस्तस्य तदार्थापत्तिरिष्यते॥**

विधाता निर्ममे देहं हरिणाक्ष्या हरिद्रया।
नो चेद्रागः सुधाधानादधरे न हि संभवेत्॥ २१५॥

(अथानुपलब्धिः—)

**अप्रत्यक्षप्रमाणत्वेऽनुपलब्धिरलंकृतिः।**

असदेवावलग्नं तेऽनुपलब्ध्योऽहते बुधः।
कामेन्द्रजालं यद्दते कुचकुम्भस्थितौ पुनः॥ २१६॥

(अथैतिह्यम्—)

**पारम्पर्यप्रवादश्च यत्रानिर्दिष्टवक्तृकः।**
**निबध्यते तदा तस्मिन्नैतिह्यालंकृतिर्मता॥**

प्राचीनम्—

कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे।
एति जीवन्तमानन्दो नरं वर्षशतादपि॥ २१७॥

(अथ संभवः—)

**संभवस्तु निमित्तेन वस्तुसंभावना यदि।**

राधिकासदृशी कान्ता नासीदस्ति भविष्यति।
मैवं वद विधेः सृष्टिर्विचित्रा विपुला मही॥ २१८॥

**केचिदाचारात्मतुष्टी प्रमाणालंकृती विदुः॥**

महाजनाचारपरम्परेदृशी स्वनाम नामाददते न साधवः।
अतोऽभिधातुं न तदुत्सहे पुनर्जनः किलाचारमुचं विगायति॥२१९॥

प्राचीनम्—

असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः।
सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणस्य वृत्तयः॥ २२०॥

**अर्थशब्दोभयेषां वालंकाराणां च मेलने।**
**तिलतण्डुलसंश्लेषन्यायात्संसृष्टिरिष्यते॥**

सुकवेर्भणितिः सद्यः श्रवणपुटेष्वहह माधुरीं सृजति ।
तरुणस्वान्तसरोजे प्रेममरन्दं विलासिनी दृष्टा ॥ २२१ ॥

स जयति बल्लवबालो बल्लवललनारतान्तविश्रान्तिम् ।
कुरुते मिलदलिपुञ्जे मञ्जुलमल्लीमतल्लिकाकुञ्जे ॥ २२२ ॥

किंचिदुत्स्फटितपङ्कजगन्धैरञ्चितः शिशिरशावसमीरः ।
तं चकार कमला त्वयि कोपं मुञ्चतामिति च वक्तुमिवागात् ॥ २२३ ॥

**यत्र नीरक्षीरनयादस्फुटान्योन्यमेलने ।**
**अलंकृतीनां तत्र स्यात्संकरः परिकीर्तितः ॥**
**अङ्गाङ्गिभावसंदेहसमप्राधान्यसंकराः ।**
**तथैकवाचकानुप्रवेशश्चेति चतुर्विधः ॥**
**अलंकृतीनामन्योन्योत्थाप्योत्थापकता यदि ।**
**अङ्गाङ्गिभावनामासौ संकरालंकृतिर्मता ।**
**विजातीयसजातीयभेदेन द्विविधो मतः ॥**

कुचकैतवमस्य बिभ्रतः पटजालेन खगस्य बन्धनम् ।
अकरोदिव पाणिपञ्जरस्थितये नन्दसुतस्य कामिनी ॥ २२४ ॥

तिलकभ्रमरस्फारविलासेन मनोरमम् ।
आननं मृगशावाक्ष्याः सरोरुहमिवाबभौ ॥ २२५ ॥

**एकालंकारकोट्यां च प्रतिक्षेपो भवेद्यदि ॥**
**तदन्यालंकारकोटेस्तत्र संदेहसंकरः ।**

प्राचीनम्—

मुखेन गरलं मुञ्चन्मूले वसति चेत्फणी ।
फलसंदोहगुरुणा तरुणा किं प्रयोजनम् ॥ २२६ ॥

**अलंकारेण केनापि चेकदोत्थापनं यदि ।**
**अनेकेषामेकवाक्ये समप्राधान्यसंकरः ॥**

अङ्गुलीभिरिव केशसंचयं संनिकृष्य तिमिरं मरीचिभिः ।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥ २२७ ॥

अनेकालंकृतीनां चेदेकवाचकबद्धता।
तदैकवाचकानुप्रवेशसंकर इष्यते॥
भुजंगलीलासंतृप्तो नरेन्द्रो दीनहिंसकः।
याच्ञावृत्तिपरो भाति विषवैद्य इव प्रभुः॥ २२८॥

इत्यलंकारप्रकरणम्।

ध्वनिस्तु लक्षणामूलाभिधामूलभिदा द्विधा।
तत्राद्ये लक्षणामूले वाच्यं स्यादविवक्षितम्॥
विवक्षितं चान्यपरमभिधामूलकध्वनौ।
आद्यस्तु लक्षणामूलो गूढव्यङ्ग्यप्रधानकः॥
अर्थान्तरे संक्रमिते वाच्येऽत्यन्ततिरस्कृते।
इति द्विधापि स द्वेधा पदवाक्यगतत्वतः॥
एवं चतुर्विधः प्रोक्तो लक्षणामूलकध्वनिः।
वाच्यस्यार्थान्तरत्वेन परिणामो यदा भवेत्॥
अर्थान्तरे संक्रमितवाच्यमाहुस्तदा ध्वनिम्।
यस्मिञ्जीवति जीवन्ति बहवः स तु जीवतु।
अर्थान्तरे संक्रमितवाच्यं चेह पदे भवेत्॥
शृणु मे वचनं वत्स कुरु भक्तिं वृषध्वजे॥ २२९॥
अर्थान्तरे संक्रमितवाच्यं वाक्ये भवेदिह।
वाच्यार्थे त्वन्वयायोग्ये स्यादत्यन्ततिरस्कृतम्॥
नीलिमालिप्तदिक्प्रान्ताः कान्तादृक्प्रान्तवीचयः।
इत्यादिषु पदे वाच्यं स्यादत्यन्ततिरस्कृतम्॥ २३०॥
धवलिम्ना विलिम्पन्ति यशांसि तव दिक्तटीः।
इत्यत्र वाक्ये वाच्यं च स्यादत्यन्ततिरस्कृतम्॥ २३१॥
यस्तु वाच्यविवक्षायां गूढव्यङ्ग्यप्रधानकः।
स विज्ञेयोऽभिधामूलो द्विविधश्चैष कीर्तितः॥
स संलक्ष्यक्रमव्यङ्ग्यालक्ष्यव्यङ्ग्यक्रमात्मना।
उक्तो बुधैः स संलक्ष्यक्रमोऽनुरणनोपमः॥

शब्दार्थोभयशक्त्युत्थस्त्रिधानुरणनध्वनिः ।
स्यात्पर्यायासहिष्णुत्वे शब्दशक्त्युद्भवो ध्वनिः ॥
अलंकृतेर्वस्तुनो मा प्राधान्याच्छब्दशक्तितः ।
यत्र व्यक्तिर्भवेत्सोऽयं शब्दशक्त्युद्भवो द्विधा ।
पदवाक्यगतत्वेन द्विविधोऽपि पुनर्द्विधा ॥

चित्ते स्फुरति तद्रूपं हरेर्दैत्यद्विपद्विपः ।
इत्यत्र शब्दशक्त्युत्थः स्यात्पदेऽलंकृतिध्वनिः ॥ २३२ ॥
प्रतापवानिनो भाति भजन्नुदयमुच्चकैः ।
इत्यादौ शब्दशक्त्युत्थः स्याद्वाक्येऽलंकृतिध्वनिः ॥ २३३ ॥
समरे त्वद्भुजाशौर्यं पश्यन्त्यनिमिषद्विषः ।
इत्यादौ शब्दशक्त्युत्थः स्यात्पदे वस्तुनो ध्वनिः ॥ २३४ ॥
अवनी च वनी च त्वद्विषां न दिशति स्थितिम् ।
इत्यादौ शब्दशक्त्युत्थो वाक्ये वस्तुध्वनिर्भवेत् ॥ २३५ ॥

अर्थस्य तु स्वतःसिद्ध्या कविप्रौढोक्तिकल्पनात् ।
वक्तुः कविनिबद्धस्य प्रौढोक्त्या कल्पनात्तथा ॥
त्रैविध्यादर्थशक्त्युत्थध्वनिश्चापि त्रिधा मतः ।
वस्त्वलंकारभेदेन त्रिविधोऽपि पुनर्द्विधा ॥
ते व्यङ्ग्यव्यञ्जकत्वेन षड्विधाश्च पुनर्द्विधा ।
पुनर्वाक्यगतत्वेन तथा पदगतत्वतः ॥
तथा प्रबन्धगत्वेन सर्वेऽपि त्रिविधा मताः ।
इत्यर्थशक्तिमूलोऽयं स्यात्षट्त्रिंशद्विधो ध्वनिः ॥

अथ स्वतःसिद्धार्थशक्तिमूलध्वनिं निरूपयामः—

अविदूरे निशा याति किमित्यालि विलम्बसे ।
इत्यादौ वस्तुना वस्तुध्वनिर्वाक्ये प्रकीर्तितः ॥ २३६ ॥
अपुरश्चरणायासं राममन्त्रः फलत्यसौ ।
इत्यादावपि वाक्ये स्याद्वस्तुनालंकृतिध्वनिः ॥ २३७ ॥

मन्वेते वज्रनिर्घोषं क्ष्वेडितं ते द्विषद्गणाः ।
इत्यलंकारतो वस्तुध्वनिर्वाक्ये प्रकीर्तितः ॥ २३८ ॥
प्राणान्मुञ्चन्ति निशितैस्त्वद्बाणैः सह वैरिणः ।
इत्यलंकारतो वाक्ये विज्ञेयोऽलंकृतिध्वनिः ॥ २३९ ॥
द्विषत्कान्तार्चति ब्रध्नं क्षणदाभावकाङ्क्षया ।
इत्यादिषु पदे ज्ञेयो वस्तुना वस्तुनो ध्वनिः ॥ २४० ॥

अथ कविप्रौढोक्तिसिद्धार्थशक्तिमूलध्वनिर्निरूप्यते—

शत्रुस्त्रैणसितज्योत्स्नां निधुनीते भवन्महः ।
इत्यादौ वस्तुना वस्तुध्वनिर्वाक्ये प्रकीर्तितः ॥ २४१ ॥
जयश्रीस्त्वां भजत्याजौ सेनाधूल्यन्धकारिते ।
इत्यादौ कीर्तितो वाक्ये वस्तुनालंकृतिध्वनिः ॥ २४२ ॥
नानावर्णं जगत्पूर्वं त्वत्कृतेरभवद्विभो ।
इत्यादिषु पदे वाच्यो वस्तुना वस्तुनो ध्वनिः ॥ २४३ ॥

अथ कविनिबद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलध्वनिं ब्रूमः—

प्रेमातिमानतो नश्येत्प्रसीद प्रणते प्रिये ।
इत्यादौ कथितो वाक्ये वस्तुना वस्तुनो ध्वनिः ॥ २४४ ॥
मीलिते स्मरतापेन शठ तस्या दृगम्बुजे ।
अत्र वाक्ये च कथितो वस्तुनालंकृतिध्वनिः ॥ २४५ ॥
नाहं दूती तनोस्तापस्तस्याः कालानलोपमः ।
इति वक्तृवचःसिद्धा(द्धो)ऽलंकृत्यावस्तुनो ध्वनिः ॥ २४६ ॥
प्रवातकदलीवास्ते तमालं वीक्ष्य सा हरौ ।
इति वक्तृवचःसिद्धा(द्धो)ऽलंकृत्यालंकृतिध्वनिः ॥ २४७ ॥
शठाधुना सा तनुते साहसं शशिवीक्षणे ।
अत्र वक्तृवचःसिद्धो वस्तुवस्तुध्वनिः पदे ॥ २४८ ॥

इत्यसावर्थशक्त्युत्थो दिशामात्रमुदाहृतः ।
पदप्रबन्धगतत्वेनाप्युदाहार्यो यथोचितम् ॥

भवेदेकविधः सोऽयं शब्दार्थोभयशक्तिजः ।
मानहृद्द्विजराजोऽयं भाति सर्वज्ञशेखरः ॥ २४९ ॥
वाक्य एव भवेदेष शब्दार्थोभयशक्तिजः ।
असंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिरिष्यते ॥
वाक्ये पदैकदेशे च प्रबन्धे च तथा पदे ।
वर्णेषु रचनायां च गतत्वेन स षड्विधः ॥
वक्ष्ये साकू(क)शिमाश्लिष्टा शठोच्छ्वसिति सांप्रतम् ।
अत्र वाक्ये विप्रलब्धशृङ्गारध्वनिरीरितः ॥ २५० ॥
संनिधत्ते सदा चित्ते तद्वक्त्रं तरुणीमणेः ।
असंलक्ष्यक्रमव्यङ्ग्यध्वनिरत्र पदे भवेत् ॥ २५१ ॥
एवमग्रेऽप्युदाहार्यं वर्णादिषु यथोचितम् ।
एतत्सर्वं रम्यबिन्दौ सप्रपञ्चं प्रकाशितम् ॥
एवं चैकपञ्चाशद्विधः शुद्धो ध्वनिर्मतः ।
मिश्रणेऽन्योन्यमेतेषां भेदा द्विङ्दृग्गुणध्रुवाः (१३२६) ॥
चतुर्विधैः संकरैश्च संसृष्ट्या चैकरूपया ।
पञ्चधा योजने तेषां भेदाः खाग्निरसारयः (६६३०) ।
क्रमाद्गतिर्लिपीनां स्यादङ्कानां वामतो गतिः ॥

इति ध्वनिप्रकरणम् ।

गुणीभूतव्यङ्ग्यमपि चाष्टधा परिकीर्तितम् ।
अगूढं वाच्यसिद्ध्यङ्गं तुल्यप्राधान्यमस्फुटम् ।
संदिग्धमपराङ्गं च काकाक्षिप्तमसुन्दरम् ।
अगूढतासहृदयैरिवान्यैरपि वेद्यता ॥
सोऽयं विजयते राजा सुमनःसंघरञ्जकः ।
वाच्यसिद्ध्यङ्गमेतद्यद्विना वाच्यं न सिध्यति ।
भूभृदाभाति काश्मीरपङ्कगैरिकपाटलः ॥ २५२ ॥
वाच्यव्यङ्ग्यार्थयोस्तुल्ये तुल्यप्राधान्यमिष्यते ॥
जातस्त्वद्वैरिसुदृशां सरणायाञ्जनं दृशः ।

स्याद्यत्सुहृदयस्यापि दुःखवेद्यं तदस्फुटम् ।
भूपो गुणाहितप्रीतिर्भुनक्त्यम्बुधिमेखलाम् ॥ २५३ ॥
संदिग्धं तत्तु कथितं वाच्यात्प्राधान्यसंशये ॥
त्वामालोक्य रणे वैरी वीक्षते विजनं हयम् ।
अपराङ्गं यदाङ्गे चेद्रसादेस्तु रसादिकम् ।
क्षणध्वस्तखरानीकं जानकी सस्वजे प्रियम् ॥ २५४ ॥
काक्वाक्षिप्तं तु तत्र स्याद्यत्र काक्वा विभाव्यते ।
मन्ये सा सुभगा मत्तो यां त्वमेवानुधावसि ।
वाच्यान्निकृष्टं व्यङ्ग्यं चेदसुन्दरमितीर्यते ॥
अतपःक्लेशसुकृतं ब्रह्मर्षे तव दर्शनम् ॥ २५५ ॥
चतुर्विधैः संकरैश्च संसृष्ट्या चैकरूपया ।
पञ्चधा योजने तेषां चत्वारिंशद्विधं च तत् ॥
एवं निरूपिते साङ्गे ध्वन्यलंकारलक्षणे ।
सन्तो महान्तः क्षाम्यन्तु यत्किंचित्स्खलितं यदि ॥

जलजनिजनिजायाप्रेमपाकेन गोपी-
जनमनसिजकेलीलम्पटेऽलंपटेन ।
गुहपुरनिलयेन प्रोद्धृतो व्यङ्ग्यबिन्दुः
सुरकुसुममरन्दे चारुचम्पूप्रबन्धे ॥

इति श्रीमद्घटिकाशतशतघण्टाविहिताष्टभाषासरसकविताचरणनिपुणस्य वासुदेवयोगीश्वरस्यान्तेवास्यन्यतमस्य गुहपुरवासशर्मणः कृष्णशर्मणः कवेः कृतौ मन्दारमरन्दे चम्पूप्रबन्धे व्यङ्ग्यबिन्दुर्दशमः समाप्तिमगमत् ।

---

शेषबिन्दुः ।

अत्रान्त्य(न्ति)मे शेषबिन्दावनुक्तान्पूर्वबिन्दुषु ।
लक्ष्यलक्षणसंयुक्तांस्तत्क्रमेणाभिदध्महे ॥
एकश्चन्द्रार्कविघ्नेशरदशुक्राक्षिभूध्रुवाः ।
द्वयं द्वन्द्वं युगं युग्मं यमलं यामलं यमम् ॥
युगलं द्वितयं पक्षो नदीकूलं करः कुचः ।

जानुपादौ बाहुगुल्फौ जङ्घोष्ठौ राघवात्मजौ ॥
असिधाराकर्णहोराकपोलनयनभ्रुवः ।
नितम्बायनपक्ष्माणि हनूरुवडवास्तनाः ॥
त्रयं कालाग्निरुद्राक्षिसंध्याभुवनपुष्करम् ।
ग्रीवा रेखा शूलशिखा नाडी रामो गुणः पुरः ॥
गायत्रीवह्निचरणौ विष्णुपत्नी वलिस्तनुः ।
शक्तिमूर्तिर्भृङ्गिपादस्त्रिविक्रमपदार्पणम् ॥
चत्वारि गोस्तनब्रह्ममुखवर्णार्णवाश्रमाः ।
स्वर्दन्तिदन्तसेनाङ्गविष्णुवाहुयुगाः श्रुतिः ॥
पुरुषार्थोपाययामपशुमञ्चपदानि च ।
पञ्च पापमहाकाव्यशिवास्येन्द्रियपाण्डवाः ॥
विषयानिलवर्गाङ्गभूतस्वर्द्रुमहामखाः ।
पुराणलक्षणप्राणसायकक्लेशपल्लवम् ॥
षड्वज्रकोणवेदाङ्गरसतर्कारिकारकम् ।
प्रयोगप्रश्नगायत्रीजठरं चक्रवर्त्यपि ॥
शास्त्रशस्त्राङ्गकर्मर्तुभृङ्गपादगुहाननम् ।
सप्त मातृद्वीपशैलवारराज्याङ्गताण्डवाः ॥
मुनिस्वरनदीव्याधवह्निजिह्वाश्वधातवः ।
अष्ट दिक्पालेशमूर्तिसिद्धिसिद्धान्तकुञ्जराः ॥
वसुलक्ष्मीगन्धमजब्रह्मश्रोत्राहिमङ्गलम् ।
गयायोगाङ्गनत्यङ्गमहिषीकुलपर्वताः ।
नव रत्नं निधिर्गोप्यखण्डधान्यग्रहास्तथा ॥
धेनुरन्ध्रशिलाभक्तिवीरव्याघ्रीस्तनाम्बुदाः ।
बिन्द्वर्थकाः शून्यपूर्णकान्तामध्याभ्रखानि च ॥
दश स्नानस्थाणुबाहुरावणाननचुम्बनम् ।
कृष्णावतारदिग्घस्ताङ्गुल्यवस्थेन्दुवाजिनः ॥
धर्मपत्नीधूपपङ्क्तिनिघण्टुसुतरूपकम् ।

एकादश स्यात्करणं कुरुसेना वृषध्वजः ॥
द्वादशार्का मासराशिसंक्रान्तिगुहबाहवः।
शारिकोष्ठकसेनानीनेत्रभूपतिमण्डलाः॥
त्रयोदश स्युर्वीथ्यङ्गविश्वकश्यपकामिनी।
सामगाचार्यताम्बूलगुणप्रतिमुखाङ्कम् ॥
चतुर्दश मनुर्विद्यायमेन्द्राभिनया मृगः।
पञ्चदश तिथिः सामिधेनी कान्ताकलापि च ॥
षोडशेन्दुकला गौरी नाट्यचेष्टोपकारकम्।
संस्कारः सप्तदश तु प्राजापत्यपशुर्मतः॥
अष्टादश धृतिः पीठं पर्वोपद्वीपभारतम्।
एकोनविंशतिर्देववाद्यमप्यथ विंशतिः॥
अङ्गुलीरावणभुजकपोलाक्षिकरभ्रुवः।
एकविंशतिसंख्यायां मूर्छनानुस्मृतिः समित् ॥
द्वाविंशतिश्चोपसर्गश्चतुर्विंशतिवाचकाः।
वाक्यदोषन्यायगुणगायत्रीजिनकेशवाः॥
शतं त्रायुःकञ्जदलशक्रयज्ञाब्धियोजनाः।
सहस्रं जाह्नवीवक्रं शेषशीर्षाम्बुजच्छदाः॥
रविबाणार्जुनकरा वेदशाखेन्द्रदृष्टयः।
एतेषामपि पर्यायास्तत्तत्संख्याविबोधकाः॥

इति संख्याप्रकरणम्।

विरामो विरतिश्छेदो विच्छेदश्छेदनं छिदा।
यतिर्विभेदश्वसनं श्वासो भिद्भेदनं भिदा॥
छिदाश्वासस्तथा छित्तिरिति विच्छित्तिबोधकाः।
अयुक्तमोजो विषममयुक्चासममीरितम् ॥
युगनोजः समं युक्तमितीमे समवाचकाः
गो गुरुस्त्वनृजुर्वक्र इतीमे गुरुवाचकाः॥
अवक्रो लो ऋजुर्मात्रालवश्च लघुवाचकाः।

वर्णस्तु द्विविधः प्रोक्तो गुरुलघ्वोर्विभेदतः ।
गुरुः प्लुतो द्विमात्रोऽपि लघुः स्यादेकमात्रकः ॥
युक्तपूर्वो विसर्गान्तो दीर्घो विन्दुयुतो गुरुः ।
तदन्यो लघुरुक्तोऽथ विकल्पगुरुरुच्यते ॥
चरणादिमवर्णस्य संयोगः क्रमसंज्ञकः ।
तस्य प्राक्स्थितवर्णश्च पादान्तस्थश्च वा गुरुः ॥

यथा—

सज्जननिचयः परगतगुणदोषौ वीक्ष्य दोषमुत्सृजति ।
हंसो भाजनसंगतक्षीरजले वीक्ष्य नीरमुत्सृजति ॥ १ ॥

रहयुक्ताक्षरात्पूर्वं रयुक्तात्क्रुपुवर्णतः ।
पूर्वं वर्णं विकल्पेन गुरुं केचित्प्रचक्षते ॥
गणस्तु द्विविधः प्रोक्तो वर्णमात्राविभेदतः ।
तत्र वर्णगणस्तु स्यादक्षरत्रितयात्मकः ॥
मयौ रसौ तजभना इत्यष्टार्णगणाः स्मृताः ।
त्रिगो मो मुखलो यः स्यान्मध्यलो रोऽन्तगश्च सः ।
अन्त्यलस्तो मध्यगो जो मुखगो भस्त्रिलस्तु नः ॥

श्रीकान्तः । कपाली । राधिका । कमला । कृष्णाय । करोति । पाथसि । भवति । इति ॥

मध्याछन्दसि चोद्भूता इमे वर्णगणा मताः ॥
मस्य भूमिर्देवता स्यात्संपत्तिः फलमिष्यते ॥
यस्य पाथो देवता स्यात्फलं वृद्धिः प्रकीर्तिता ।
रस्य वह्निर्देवता स्यात्फलं मरणमीरितम् ॥
सस्य वायुर्देवता स्याद्देशान्तरगतिः फलम् ।
तस्याकाशो देवता स्यात्फलं शून्यं प्रकीर्तितम् ॥
जस्य सूर्यो देवता स्याद्रोगप्राप्तिः फलं मता ।
भस्य चन्द्रो देवता स्यात्फलं कीर्तिरुदाहृता ॥
नस्य नाको देवता स्यात्फलं च सुखमच्युतम् ।

कलाचतुष्टयात्मा तु मात्रागण उदाहृतः ।
भजलाद्विगुरुश्चैव नलश्चेति स पञ्चधा ॥
रोधसि । तटेषु । नलिनं । मित्रः । कथयति । इति ॥
छन्दोऽपि द्विविधं प्रोक्तं वार्णमात्रविभेदतः ।
वार्णं तूक्तादिकं प्रोक्तं मात्रं त्वार्यादिकं मतम् ॥
पादान्त एव केचिच्च पादमध्येऽपि केचन ।
यतिं वदन्ति तत्रापि विशेषः स्फुटमुच्यते ॥
धातुनामस्वभिन्नेषु यतिर्भवति नान्यथा ।
कृष्ण एव परं वेत्ति राधिकाया मनोगतम् ।
पश्यन्तीं वीक्ष्य कालिन्दीकूलकुञ्जमगात्ततः ॥ २ ॥
उपसर्गान्ततश्छेदः प्रत्ययादौ तयोः क्वचित् ॥
राधा केलौ बहु परितोषयत्यम्बुजेक्षणम् ।
तस्मान्न चेहते त्वां संपूर्णचन्द्रमुखीं हरिः ॥ ३ ॥
रासोत्सवे मुहुश्चुम्बत्ययं राधामुखाम्बुजम् ।
इति रोषकषायाक्षीणां मुखानि प्रतीक्षते ॥ ४ ॥
स्वरसंधौ तु संप्राप्तसौन्दर्याद्यतिरिष्यते ।
तादृग्गोपीकेलिलोलोऽस्तु मुदे मम माधवः ।
तु चादयो न प्रयोज्या विच्छेदात्परतस्तथा ॥
नमः शिवाय शान्ताय तूदयद्बहुलोजसे ॥ ५ ॥
प्रत्ययादौ यतिर्नाम्नां षष्ठ्यामेवेति केचन ।
अथ वर्णगणानां तु निवेशे फलमुच्यते ॥
मनौ मित्रौ जतौ स्यातामुदासीनौ भयौ पुनः ।
भृत्यौ रसावरीनीचौ द्वौ द्वावेतौ स्वरूपतः ॥
मित्रान्मित्रे समृद्धिः स्यान्मित्राद्भृत्ये जयो मतः ।
मित्रादुदासीनगणे सुहृत्पीडा फलं मतम् ॥
मित्राच्छत्रौ बन्धुपीडा भृत्यान्मित्रे तु सिद्धयः ।
भृत्यादुदासीनगणे सद्यः स्यात्साध्वसं फलम् ॥

भृत्याद्भृत्ये जगद्वश्यं भृत्याच्छत्रौ महान्यथा ।
उदासीनान्मित्रगणे कार्यसिद्धिर्न जायते ॥
उदासीनाद्भृत्यगणे स्वजनैः कलहो भवेत् ।
शत्रोरुदासीनगणे स्वकुलस्य क्षयः फलम् ॥
शत्रोर्मित्रे फलं शून्यं शत्रोर्भृत्ये स्त्रियामृतिः ।
शत्रोः शत्रौ काव्यकर्तुर्नाशो भवति निश्चितम् ॥
परिशुद्धार्णसंबन्धे राज्यप्राप्तिर्भवेद्ध्रुवम् ।
अतश्चाचां हलां चापि वर्णानां फलमुच्यते ॥
ऋऌवर्णौ विहायाचः प्रोक्ताः संपत्करा बुधैः ।
कखौ गघौ च संपत्तौ ङश्चापयशसि स्मृतः ॥
चः सुखे छः प्रेम्णि जस्तु मित्रलाभे च झो भये ।
ञो मृतौ च टठौ दुःखे डः शोभायां च णो भ्रमे ॥
तः सुखे थश्च युद्धे ढो विशोभायां च दः सुखे ।
धौ संतोषे च पः सौख्ये फो भये बो भवेन्मृतौ ॥
भः क्लेशे मश्च दुःखे यो लक्ष्म्यां ल्वौ व्यसनेऽपि च ।
रो दाहे शः सुखे षो हः खेदे सः सौख्य एव च ।
ळः स्याच्च विलये क्षस्तु समृद्धौ संप्रकीर्तितः ॥
ये वैष्णवा दैवताश्च शब्दा भद्रादिवाचकाः ।
ते न निन्द्या गणादिभ्य इत्युक्तं पिङ्गलादिभिः ॥
उक्तात्युक्ता च मध्या च प्रतिष्ठान्यासु पूर्विका ।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥
त्रिष्टुब्जगती शक्वर्यत्यष्ट्योऽन्या अतिपूर्विकाः ।
धृतिश्चातिधृतिश्चापि कृतिः प्रकृतिराकृतिः ॥
विकृतिः संकृतिश्चातिकृतिरुत्कृतिरित्यपि ।
एकाक्षरं समारभ्य पुनरेकैकवर्धितैः ॥
पदैः पृथक्च छन्दांसि षड्विंशतिरिति स्फुटम् ।

ऋजुरेखाकृतिर्ह्रस्वो वक्ररेखाकृतिर्गुरुः ॥
आद्याद्गुरोर्लघुरधो यथोपरि तथापरम् ।
ऊने गुरुर्गुर्वभावे प्रस्तारः पूर्ण उच्यते ॥

मध्यायां तृतीये छन्दसि प्रसारो यथा—

SSS ISS SIS IIS SSI ISI SII III

आद्यतो द्विगुणैरङ्कैर्वर्धितैरेकमिश्रितैः ।
गण्यते छन्दसां वृत्तमुद्दिष्टं तु लघुस्थितैः ॥

गायत्र्यामुद्दिष्टम् ।

| | | | | | |
|---|---|---|---|---|---|
| S | I | I | S | I | S |
| १ | २ | ४ | ८ | १६ | ३२ |

२३

विषमे परिगृह्यैकमर्धस्यार्धार्धभागतः ।
समे गुरुं परत्रान्यं क्षिप्त्वा नष्टं समुद्धरेत् ॥

गायत्र्यामेव नष्टं वृत्तम् ४३ ।

| | | | | | |
|---|---|---|---|---|---|
| ४३ | २२ | ११ | ६ | ३ | २ |
| S | I | S | I | S | I |

एकैकाङ्काल्लिखेत्पूर्वं छन्दसो वर्णसंख्यया ।
तदधो द्विगुणीकृत्य पुनश्चाङ्कान्समालिखेत् ॥
आद्यादिक्रमतश्चाङ्कैर्गुणितैरेकमिश्रितैः ।
ज्ञेया संख्या तु वृत्तानामिदं संख्यानमिष्यते ॥

गायत्र्यामेव संख्यानं यथा—

| | | | | | |
|---|---|---|---|---|---|
| १ | १ | १ | १ | १ | १ |
| १ | २ | ४ | ८ | १६ | ३२ |

६४

छन्दोवर्णसमान्सैकानङ्कान्पूर्वं लिखेत्ततः ।
एकैकत्यागतस्तेषामेकद्व्यादिक्रमेण च ॥
सपूर्वैकैकगणनमुपर्युपरि निक्षिपेत् ।

प्रथमाङ्कक्रमात्पश्चाद्विजानीयाल्लगक्रियाम् ॥

यथा गायत्र्यां लगक्रिया—

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| | गु. | १ | २ | ३ | ४ | ५ | ल | |
| | ० | ० | ० | ० | ० | ६ | ० | |
| | ० | ० | ० | ० | १५ | ५ | ० | |
| | ० | ० | ० | २० | १० | ४ | ० | |
| | ० | ० | १५ | १० | ६ | ३ | ० | |
| | ० | ६ | ५ | ४ | ३ | २ | ० | |
| गु | १ | १ | १ | १ | १ | १ | १ | ल |

एकोना द्विगुणा संख्या प्रोक्ताध्वेति मनीषिभिः ।
प्रस्तारश्च तथोद्दिष्टं नष्टं संख्यानमेव च ।
लगक्रिया तथाध्वेति प्रयोगाः षडिमे मताः ॥
प्रस्तारा मेरुशकटपताकामर्कटाभिधाः ।
षट्प्रयोगेष्वेव चैतेष्वन्तर्भूता भवन्ति हि ॥
अथ वेदान्तिनां मान्त्रिकाणां मतमुदीर्यते ।
मुख्यानि सप्त च्छन्दांसि गायत्र्युष्णिगनुष्टुभः ॥
बृहती च तथा पङ्क्तिस्त्रिष्टुप् च जगतीत्यपि ।
अतिच्छन्दांसि सप्त स्युस्तथातिजगती पुनः ॥
शक्करी सातिपूर्वा न्याष्ट्यत्यष्टी धृतिरेव च ।
तथातिधृतिरित्येवं कथितानि चतुर्दश ॥
चतुर्विंशत्यक्षरात्मा गायत्री त्रिपदा मता ।
त्रयोदशान्यच्छन्दांसि चतुर्वर्णाधिकानि च ॥
चतुश्चरणयुक्तानि गायत्र्याश्चोत्तरोत्तरम् ।
तथा विराट्ककुन्मूलच्छन्दसी परिकीर्तिते ॥
एकाक्षरा द्व्यक्षरा च विराट्छन्दः प्रकीर्तितम् ।
पञ्चवर्णा चतुर्वर्णा त्र्यक्षरा च ककुन्मता ॥
गायत्र्या देवता वह्निर्विश्वेदेवौ त(वास्त)थोष्णिहः ।
बृहत्या देवता सूर्यो बृहस्पतिरनुष्टुभः ॥

अश्विनौ देवता पङ्क्तेस्त्रिष्टुभश्च सुधाकरः ।
जगतीछन्दसः प्रोक्तो देवता नाकनायकः ॥
पृथ्वी विराट्छन्दसः स्यात्ककुदस्तु त्रिविक्रमः ।
ककुद्विराट्छन्दसोस्तु केचिदेवं हरिं विदुः ॥
कृतिः प्रकृत्याकृती च विकृतिः संकृतिस्तथा ।
अतिकृत्युत्कृती चातिधृतावन्तर्भवन्ति हि ॥

यथा प्राचीनम्—

पान्त्वस्मान्पुरुहूतवैरिबलवन्मातङ्गमाद्यद्धटा-
कुम्भोच्चाद्रिविपाटनाधिकपटुप्रत्येकवज्रायिताः ।
श्रीमत्कण्ठीरवास्यप्रततसुनखरादारितारातिदूर-
प्रध्वस्तध्वान्तशान्तप्रविततमनसा भाविता नाकिवृन्दैः ॥ ६ ।

अत्र प्रकृतेरतिधृत्यामन्तर्भावः । एवमन्यत्रोदाहार्यम् । न वैकेनाक्षरेण छन्दांसि विलीयन्ते । न द्वाभ्याम् ॥

इति श्रुत्या गुरुलघुमात्रैकाद्वितयेन वा ।
न्यूनेन वाधिकेनापि तेषां छन्दो न भज्यते ।
अलंकारिमते तेन छन्दोभङ्गो भवेद्ध्रुवम् ।

इति छन्दःप्रकरणम् ।

रसापकर्षहेतुत्वं दोषत्वं परिकीर्तितम् ।
स दोषः शब्दगत्वेनार्थगत्वेन च द्विधा ॥
शब्ददोषो द्विधा प्रोक्तः पदवाक्यविभेदतः ।
तत्र श्रुतिकटु भ्रष्टसंस्कारं चाप्रयुक्तकम् ॥
असमर्थं च निहतानुचितार्थे निरर्थकम् ।
अवाचकं तथाश्लीलं संदिग्धं चाप्रतीतकम् ॥
ग्राम्यगूढार्थनेयार्थान्यथ क्लिष्टाप्रयोजके ।
अविमृष्टविधेयांशं विरुद्धमतिकृत्तथा ॥
एवं च पददोषाः स्युर्बुधैरष्टादशोदिताः ।

तत्र श्रुतिकटु ज्ञेयं माधुर्यान्यञ्जकं पदम् ॥
न ते त्वद्दयिते किं वा नैष्ठुर्यमवलम्बसे ।
यद्व्याकरणदुष्टं तद्भ्रष्टसंस्कारमुच्यते ।
रथ्यया संचरन्तं त्वां दृष्ट्वा विरमते वधूः ॥ ७ ॥
अप्रयुक्तं यदाम्नातमपि पूर्वैरनादृतम् ॥
विहायाः परितो भाति तारैः स्मरयशोऽङ्कितैः ।
असमर्थमशक्तं यदुपसंधानमन्तरा ।
विधाय त्वद्यशः सृष्टः शिष्टो धात्रा शशिच्छलात् ॥ ८ ॥
योगमात्रमयुक्तं चाप्यसमर्थमितीष्यते ॥
चतुरम्बुधराक्रान्तां भुनक्ति धरणीं नृपः ।
निहतार्थं द्वितीयार्थे ह्यप्रसिद्धे प्रयुज्यते ।
सतां क्षयकरो राजा राजते विधुवत्सदा ॥ ९ ॥
प्रस्तुतार्थविरुद्धार्थं भवेदनुचितार्थकम् ॥
अनुनीय मुहुर्दूतीं प्रेषयामास मानिनी ।
विदग्धहृदया कामशरवर्षणतेजसा ॥ १० ॥
पादपूरणमात्रार्थमव्ययादि निरर्थकम् ।
देवं कुण्ठितकालं वै नमामि च सुरेश्वरम् ।
अवाचकं तु तात्पर्याविषयार्थप्रतीतिकृत् ॥
लुब्धका विहरन्ति त्वद्रिपुस्त्रीसंचयं वने ॥ ११ ॥
व्रीडा जुगुप्सामाङ्गल्यव्यक्तीरश्लीलता मता ।
उपस्थास्यत्युत्सवं ते देवोऽभिप्रेतमादरात् ।
संदिग्धं तत्तु कथितं यदनिर्धारितार्थकम् ॥
तमः परिहरेत्सोमः सर्वापेक्षितविग्रहः ॥ १२ ॥
शास्त्रान्तरैकसिद्धार्थमप्रतीतमुदाहृतम् ।
सन्तः कुर्वन्ति कर्माणि नियोगफलनिःस्पृहाः ।
पामरव्यवहारैकप्रसिद्धं ग्राम्यमिष्यते ॥
स(क) धां कुर्वन्मिषात्तस्या गल्लयुग्मं चुचुम्ब सः ॥ १३ ॥

गूढार्थमप्रसिद्धार्थे प्रयुक्तं पदमिष्यते।
ललाटे कुरुते कान्ता रुधिरं वीक्ष्य दर्पणम्।
नेयार्थं स्याल्लाक्षणिकमशक्तं फलबोधने॥
दृशापि नैव स्पृशति वाचा शोच्या रसं तव॥ १४॥
स्वसंकेते प्रयुक्तं चाप्यर्थे नेयार्थमिष्यते।
धत्ते तव रिपुस्त्रैणं नवं कवचमाकुलम्।
क्लिष्टं भवेत्तद्यत्रार्थप्रतिपत्तिर्विवक्षिता॥
दशास्यजजितोद्भूतरिपुस्त्रीजननीपतिः॥ १५॥
तदप्रयोजकं यत्स्यादविशेषविधायकम्।
वसामि पर्वते भूमौ स्थिते तृणशिलायुते।
अविमृष्टविधेयांशं चेद्विधेयाप्रधानता॥
शूरगर्हितकीर्तिः स पलायनपरोऽभवत्।
सर्वं कषसि गर्वं त्वं न केषां युधि रक्षसाम्॥ १६॥
भवेद्विरुद्धमतिकृद्विपरीतार्थबोधकम्।
नित्यं धर्माहितमतिः सोऽयं परमशोभनः।
अपास्य च्युतसंस्कारमसमर्थं निरर्थकम्।
दोषाः श्रुतिकटुत्वाद्याः सर्वे वाक्येऽप्यमी मताः॥
अर्हन्ति बर्हिणां बर्हगर्हां तन्मूर्धजा मुहुः॥ १७॥
शब्दहीनं क्रमभ्रष्टं हतवृत्तं हतोपमम्।
यतिभङ्गोऽनुक्तवाच्यं समाप्तपुनरात्तकम्॥
भग्नछन्दश्च संकीर्णमपूर्णं वाक्यगर्भितम्।
अर्थान्तरस्थैकपदं विसंधिपुनरुक्तिमत्॥
अशरीराधिकपदप्रसिद्धिविधुराणि च।
अपदस्थसमासं च तथा मतविसर्गकम्॥
अपदस्थपदं भग्नप्रक्रमं गर्हितं तथा।
अभवन्मतयोगं चावर्णामतपदार्थके॥
पतत्प्रकर्षमित्येवं वाक्यदोषा रसभ्रुवः।

शब्दशास्त्रहतं वाक्यं शब्दहीनमितीर्यते ॥
संपश्यते मुखं तस्याः साकूतं पल्लवाग्रणीः ।
क्रमभ्रष्टं भवेद्वाक्यं यत्र शब्दस्य विक्रमः ।
यशःप्रतापयोर्मग्नौ सूर्याचन्द्रमसौ तव ॥ १८ ॥
हतवृत्तं भवेद्यत्र वृत्तं रसविरोधि तत् ॥
वल्गत्खड्गे न तेन द्राक्खण्डिताः खण्डशो द्विषः ।
असंमतोपमा यत्र कवीनां तद्धतोपमम् ।
तद्भिन्नलिङ्गवचनाधिकन्यूनोपमात्मना ॥
चतुर्धा कथितस्तेषां लक्षणोदाहृती ब्रुवे ।
भिन्नलिङ्गं भवेद्यत्रोपमा स्याद्भिन्नलिङ्गका ॥
गिरिणेव कुचस्थल्या राजते मानिनीमणिः ॥ १९ ॥
तद्भिन्नवचनं भिन्नवचना यत्र चोपमा ।
मल्लिका इव कान्ताया मन्दहासो विराजते ।
यत्रोपमानमधिकं तद्भवेदधिकोपमम् ॥
कामिन्या वदनं भाति पद्मबिम्बमिव श्रिया ॥ २० ॥
न्यूनं यत्रोपमानं स्यात्तन्न्यूनोपममिष्यते ।
यथा रेजे श्रिया विष्णुस्तथा राट् स्वश्रिया भुवा ।
यत्र स्थाने न विच्छेदो यतिभ्रष्टं तदिष्यते ॥
अनन्यललनासामान्येयं साध्वी विराजते ॥ २१ ॥
अनुक्तवाच्यं वक्तव्यानभिधायिपदोक्तितः ।
शौरेः पद्मानुरक्तस्य तथाप्येषा मनोहरा ।
मुख्यक्रियान्वये जाते पुनः किंचिद्विशेषणम् ॥
यत्रोपादीयते तत्तु समाप्तपुनरात्तकम् ।
स्मरजैत्रपताकेयं जयत्यखिलरञ्जनी ॥ २२ ॥
छन्दोभग्नं वचो यत्र भग्नच्छन्दस्तदिष्यते ॥
मुहुरालिङ्गति प्राणप्रियं कन्दर्पसदृशम् ।
संकीर्णमन्यवाक्ये चेदन्यवाक्यपदं समम् ।

चित्तमुञ्चाक्षयं भोगं शिवं क्षणिकमाश्रय ।

**अपेक्षितपदानुक्तिर्यत्रापूर्णं तदिष्यते ॥**

किं तपश्चरितं शेते तत्कुचाभ्यन्तरं मुहुः ॥ २३ ॥

**इदमेव न्यूनपदाभिधं संबन्धवर्जितम् ।**

**तद्वाक्यगर्भितं यस्य मध्ये वाक्यान्तरं यदि ॥**

बुध्वापि साध्वीं तां कान्तां खलानां बुद्धिरीदृशी ।

निर्मिता विधिना सोऽयं साहसं संगमेऽकरोत् ॥ २४ ॥

**एकार्थैकपदं चान्यार्थकवाक्यान्तरे यदि ।**

**अर्थान्तरस्थैकपदं नाम तत्स्यात्प्रवेशनम् ॥**

कौस्तुभालंकृतं वक्षः कैटभारेः कपर्दिनः ।

चूडालो बालचन्द्रेण जटाजूटश्च पातु नः ॥ २५ ॥

**असंमतः कवीनां च यत्र संधिर्विसंधि तत् ।**

**विसंहिताश्लीलकटुभेदेन त्रिविधं हि तत् ॥**

**शब्दशास्त्रहतः संधिः संहितायां विसंहितम् ।**

भाति इन्दुरिवैतस्या मुखमेणीदृशोऽधुना ।

**व्रीडाजुगुप्साकार्यर्थामङ्गलार्थप्रतीतिकृत् ॥**

**विसंध्यश्लीलाह्वयं च त्रिविधं परिकीर्तितम् ।**

यो निर्दुःखं सुखं भेजे राज्ये तस्याधुनाभवत् ।

वपुरीषद्गलद्वारि भयाद्वप्रे तव द्विषः ॥ २६ ॥

**संधौ श्रुतिकटुत्वं चेद्भवेत्कटुविसंधि तत् ॥**

असिपुत्र्यलिरुधन्त द्रोग्ध्रुरस्य पतद्घटात् ।

**शब्दार्थपौनरुक्त्ये तु पुनरुक्तिमदिष्यते ।**

विन्ध्ये काननसंकीर्णे वयं काननवृत्तयः ॥ २७ ॥

**क्रियापदेन रहितमशरीरमितीर्यते ॥**

तादृशीं कामिनीं मां च तादृशं नृपतिं विधे ।

**इदमेवानन्वयाख्यं दूषणं परिकीर्तितम् ।**

**अवक्तव्यार्थबोधः स्याद्यत्राधिकपदं हि तत् ॥**

नीलोत्पलदलाकारसदृशं तव लोचनम् ।
कविप्रसिद्ध्यतिक्रान्तं प्रसिद्धिविधुरं मतम् ।
भुवनान्युपकाराणां श्रेणिभिः प्रीणयन्ति ते ॥ २८ ॥
अपदस्थसमासं स्यादस्थाने चेत्समस्यते ॥
धनूंषि नमयन्त्येते न शिरांसीत्यरीन्प्रति ।
सद्यःसमुद्यत्क्रोधोच्चैर्बद्धभ्रूकुटिरास सः ॥ २९ ॥
यत्रामतविसर्गं तद्विसर्गाः कव्यसंमताः ।
तद्विसर्गोत्तरं नष्टं स्फुटं लुप्तमिति त्रिधा ॥
ओत्वप्राप्तौ विसर्गाणां ज्ञेयं नष्टविसर्गकम् ।
भवतो विमतो भीतो यातो दारयुतो वनम् ।
यत्र स्फुटा विसर्गाः स्युस्तत्स्यात्स्फुटविसर्गकम्
अहितः सहितः सैन्यैः परितः क्षपितस्त्वया ॥
विसर्गा यत्र लुप्ताः स्युस्तत्स्याल्लुप्तविसर्गकम्
विनता रक्षिता राज्ञा निहता विमता रणे ।
अपदस्थपदं तत्स्याद्यत्रास्थाने पदं भवेत् ॥
वसुंधरायामेव त्वं धरानाथ धनुर्धरः ॥ ३१ ॥
प्रक्रान्तशैलीत्यागे तु भग्नप्रक्रममिष्यते ।
गुहा गृहा मही शय्या वैष्णवा बान्धवा मम ।
गर्हितं यदि वाक्यार्थे वाक्यान्तरनिवेशनम् ॥
चित्त श्रेयस्करं मुञ्च भज तृष्णां सदाशिवम् ॥ ३२ ॥
इदमेव भवेद्वाक्यसंकीर्णाभिधदूषणम् ।
अभवन्मतयोगं स्यादिष्टान्वयमतिर्न चेत् ॥
यैर्ध्यातस्त्वं ये स्तुवन्ति जनास्त्वामीश पासि तान् ।
अवर्णं नाम कथितं रसाननुगुणं वचः ।
ज्ञानध्वस्तसमस्तोऽहं ब्रह्म साक्षात्क्रिये कदा ॥ ३३ ॥
इदमेवारीति नाम प्रतिकूलाक्षरं तथा ॥
विरुद्धरसयोर्व्यक्तिर्यदामतपदार्थकम् ।

आरुह्योरुस्थलीं व्याघ्रीं चुम्बत्यस्य मुखाम्बुजम् ।
पतत्प्रकर्षं बन्धस्य पादे पादे प्रहीणता ॥
विव(प)क्ष्यक्षितिभृत्पक्षच्छेदी विजयते नृपः ॥ ३४ ॥
पद्य एव च दोषत्वं स्याच्छन्दोयतिभङ्गयोः ।
चतुर्विंशतिरन्ये च स्युर्दोषा वाक्यपद्ययोः ॥
पद्यदोषौ विदुः केचिद्धतवृत्तविसंहिते ।
अपुष्टकष्टव्याघातपुनरुक्ताधिकोपमाः ॥
अपार्थदुष्क्रमग्राम्यसंदिग्धनियमच्युताः ।
साकाङ्क्षपुरुषाश्लीलव्यर्थभिन्नासमोपमाः ॥
अनिरूप्यश्चातिमात्रो निर्हेतुरनवीकृतः ।
अप्रसिद्धपमो हीनोपमः सहचरच्युतः ॥
विरुद्धश्चेति दुष्टार्थाश्चतुर्विंशतिरीरिताः ।
उत्कर्षं यो न पुष्णाति सोऽर्थोऽपुष्ट इतीष्यते ॥
उदयं भजते चन्द्रः पौर्णम्यां रजनीमुखे ।
कृच्छ्रेण गम्यते योऽर्थः स कष्ट इति कथ्यते ।
तर्को यस्त्वाह मद्भक्ष्यं तत्फलोक्तावववाक् स किम् ॥ ३५ ॥
व्याघातः पूर्वकथितविरुद्धार्थोपवर्णने ॥
त्वन्मुखेन्दुतुला कस्मादिन्दोरस्य कलङ्किनः ।
पुनरुक्तः प्रतीतार्थकथनं स्याद्विना फलम् ।
यथा स्कन्देन गिरिजा जयन्तेन यथा शची ।
तथा सुतेन सा रेजे तत्समेनेह तत्समा ॥ ३६ ॥
इदमेव बुधा एकार्थाभिधं दूषणं विदुः ॥
यत्रोपमानमधिकं कथितः सोऽधिकोपमः ।
बकः पर्वतशृङ्गाग्रे गरुत्मानिव राजते ।
न यत्र समुदायार्थः सोऽपार्थ इति कीर्तितः ॥
रटन्ति करटाः क्रूरं सुन्दरी नृपकामिनी ॥ ३७ ॥
दुष्क्रमस्तु यथायोग्यक्रमहीनार्थ इष्यते ।

समुद्धरेदसावद्रीन्पादपान्वा बलोद्धतः।
अविदग्धैरुच्यमानस्त्वर्थो ग्राम्य इतीरितः॥
मयि संभोगसाकाङ्क्षेऽप्यबले किमुपेक्षसे॥ ३८॥
तात्पर्यग्राहकाभावात्संदिग्धोऽनवधारितः।
अर्थः सेव्योऽथ वा कामो भवन्तः कथयन्तु मे।
अवश्यवाच्यनियमरहितो नियमच्युतः॥
अद्य राजन्वती जाता त्वया नृप वसुंधरा॥ ३९॥
पदार्थान्तरसापेक्षस्त्वर्थः साकाङ्क्ष उच्यते।
भीमो नामृष्यत तदा क्लिश्यमानां परैः प्रियाम्।
अत्यन्तकर्कशार्थस्तु परुषो नाम कीर्तितः॥
दावानलेन्धनं सद्यः क्रियन्तामर्भका इमे॥ ४०॥
अश्लीलः स्यात्स वाक्यार्थो व्रीडाकार्यर्थसूचकः।
प्रविशत्युत्थितो धृष्टो रन्ध्रमिच्छन्पुनः पुनः।
प्रयोजनेन रहितो योऽर्थः स व्यर्थ इष्यते॥
घटी कुचतटी कान्ता विटं किमिति नेहते॥ ४१॥
संबन्धवर्जितो योऽर्थः स भिन्न इति कथ्यते।
श्लाघ्यो रत्नाकरो यस्मात्क्षराणां पयसां निधिः।
यत्रासदृक्षोपमानं सोऽर्थः स्यादसमोपमः॥
ललाटतटसंस्पृष्टमुक्ताजालकमण्डितः।
वाजी फालस्फुरन्नेत्रो महादेव इवाबभौ॥ ४२॥
अनिरूप्यो नामतः स्यादयुक्तस्यानुवादतः।
हरते पथिक प्राणाञ्जगत्प्राणोऽतिपातकी।
यः सर्वलोकातीतार्थः सोऽतिमात्र इतीरितः॥
सभापि ब्रह्मणो मग्ना चकोरीनयनाम्बुषु॥ ४३॥
हेतुं विनोच्यते योऽर्थः स निर्हेतुरितीर्यते।
वेश्येयं बहुदातारमपि तं न समीहते।
विशेषापर्यवसितः स्यादर्थस्त्वनवीकृतः॥

किं विद्यया किं धनेन किमु स्त्रीभिः किमायुषा ॥ ४४ ॥
**यत्राप्रसिद्धोपमानमप्रसिद्धोपमश्च सः ।**
वियुक्तकामिनीवक्त्रं दिवा नीलाब्जवद्बभौ ।
**हीनं यत्रोपमानं स्यात्सोऽर्थो हीनोपमो मतः ॥**
अलर्केणेव सारंगा भवता निहता द्विषः ॥ ४५ ॥
**अतुल्येन सहोक्तार्थो भवेत्सहचरच्युतः ।**
ज्योत्स्नेवेन्दुं मृषोद्येव धूर्तं सा न जहौ पतिम् ।
**विरुद्धो देशकालादिविरुद्धार्थः प्रकीर्तितः ॥**
मरुस्थलेऽपि गङ्गा नः पिपासां शमयिष्यति ॥ ४६ ॥
**केषांचिदथ दोषाणामप्यदोषत्वमुच्यते ।**
**समाप्तपुनरात्तत्वं सर्वेषां न हि संमतम् ॥**
**अप्रयुक्तत्वमधिकपदत्व[म]समर्थता ।**
**श्लेषचित्रोपयोगित्वाद्दोषत्वं न भजेत्क्वचित् ॥**
**निरर्थकत्वं शब्दालंकारे श्लेषे च न क्वचित् ।**
**संकीर्णार्थान्तरस्थैकपदत्वे चित्रयोर्न हि ॥**
**श्लेषे क्वचिच्च गूढार्थनेयार्थत्वेन दोषताम् ।**
**शास्त्रार्थे न यतेर्भङ्गश्चारुत्वे नातिमात्रता ॥**
**चित्रे क्वचिन्न साकाङ्क्षक्रमभ्रष्टत्वकष्टताः ।**
**अपदस्थपदत्वं चाप्यपदस्थसमासता ॥**
**ध्वनौ संदिग्धनियमच्युतत्वेन क्वचित्क्वचित् ।**
**अपुष्टार्थो न दोषाय प्रयोजनवशात्क्वचित् ॥**
विभान्ति पुष्पस्तबकैर्लताः कान्ता इव स्तनैः ।
**हेतोरतिप्रसिद्धत्वे निर्हेतोः स्याददुष्टता ।**
वदनं वीक्ष्य तन्वङ्ग्याः सरःपद्मान्यलिर्जहौ ।
**नीरसादौ क्वचिद्दोषो न दोषो नाप्यसौ गुणः ॥**
पर्जन्यस्तर्जयामास गर्जितैरूर्जितैर्जनान् ॥ ४७ ॥

वस्तुतस्तु कवीनां चेद्धृदयानन्दकारणम् ।
न दुष्टं स्यादन्यथा चेद्दुष्टतां भजति ध्रुवम् ॥

इति काव्यदोषप्रकरणम् ।

ये रसस्याङ्गिनो धर्माः शौर्यादय इव स्थिताः ।
उत्कर्षहेतवस्ते स्यू रचनास्थितयो गुणाः ॥
ओजोमाधुर्यगाम्भीर्यप्रसादश्लेषविस्तराः ।
समता सौकुमार्यं च सौशब्द्यं भाविकं गतिः ॥
अर्थव्यक्तिरुदारत्वं सौक्ष्म्यं कान्तिरुदात्तता ।
प्रेयः प्रौढी रीतिरुक्तिः संमितत्वं तथैव च ॥
समाध्यौर्जित्यसंक्षेपास्ते चतुर्विंशतिः स्मृताः ।
दीर्घदीर्घसमासत्वमोजःशब्देन गीयते ॥

तुहिननगतनूजानाथनालीकखेल-
द्रजनिकमनकन्यासारलीलाहसच्छ्रीः ।
प्रणयकुपितकान्ताकान्तनेत्रान्तपाते
सति रतिपतिसूनोः पातु वः सस्मिता वै ॥ ४८ ॥

पृथक्पदत्वं माधुर्यं गाम्भीर्यं ध्वनिरुक्तता ।
शीघ्रार्थबोधकत्वं तु प्रसाद इति कथ्यते ॥
मिथः संश्लिष्टपदता श्लेष इत्युच्यते बुधैः ।
विस्तरस्त्वतिविस्तारादुक्तार्थस्य समर्थनम् ॥
अवैषम्यं च समता सौकुमार्यमरूक्षता ।
सुप्तिङ्व्युत्पत्तिसंबन्धः सौशब्द्यमिति कथ्यते ॥
यत्र भाववशाद्वाक्यवृत्तिस्तत्र तु भाविकम् ।
स्वरारोहावरोहाभ्यां रम्यत्वं गतिरिष्यते ॥
अर्थव्यक्तिस्तु संपूर्णस्वरूपस्फुटता मता ।
विकटाक्षरबन्धत्वमुदारत्वमितीष्यते ॥
कान्तिरुज्ज्वलता सौक्ष्म्यमन्तः सोज्ज्वलरूपता ।

उदात्तता भवेद्यत्र योगः श्लाघ्यैर्विशेषणैः ॥
प्रेयः प्रियतराख्यानं चाटूक्तौ यद्विधीयते ।
अत्यन्तपक्किमोक्तिस्तु प्रौढिरित्यभिधीयते ॥
यथोपक्रमनिर्वाहः सान्तं रीतिरितीर्यते ।
विदग्धभणनं यत्तु तदुक्तिरिति कथ्यते ॥
यावदर्थपदत्वं तु संमितत्वमुदाहृतम् ।
समाधिरन्यधर्माणां यदन्यत्राधिरोहणम् ॥
पदन्यासस्य गाढत्वमौर्जित्यमिति कीर्त्यते ।
संक्षेपतोऽर्थकथनं संक्षेप इति कथ्यते ॥
गाम्भीर्यं विस्तरः सौक्ष्म्यमर्थव्यक्तिस्तथैव च ॥
प्रौढिरुक्तिः समाधिश्च प्रेयः संक्षेप इत्यपि ।
एवं नव गुणा आर्था अन्ये शब्दगुणा मताः ॥

दोषाभावस्यापि गुणत्वं येऽङ्गीकुर्वन्ति तेषां मत एवैतेषां गुणत्वम् । दोषाभावस्य गुणत्वानङ्गीकर्तॄणां मतमितः परं ब्रूमः । तथा हि ।

ओजः प्रौढिरुदारत्वं माधुर्यं भावुकं गतिः ।
संक्षेपश्चेति सप्तैते गुणाः स्यू रचनाश्रिताः ॥
ग्राम्यत्वदोषाभावात्सा कान्तिर्नैव विभिद्यते ।
संमितत्वं त्वपूर्णत्वदोषाभावान्न भिद्यते ॥
उदात्तत्वं चानुचितार्थत्वाभावान्न भिद्यते ।
अर्थव्यक्तिस्तु साकाङ्क्षत्वाभावान्नातिरिच्यते ॥
सौशब्द्यं च्युतसंस्कारत्वाभावान्न पृथग्भवेत् ।
और्जित्यं तु विसंबन्धित्वाभावतो नातिरिच्यते ॥
पतत्प्रकर्षताभावात्समता न विभिद्यते ।
अश्लीलतार्थदोषस्याभावादुक्तिर्न भिद्यते ॥
परुषस्यार्थदोषस्याभावात्प्रेयो न भिद्यते ।
भग्नप्रक्रमताभावाद्रीतिस्तु न पृथग्भवेत् ॥
समाधिरर्थरूपत्वात्काव्यरूपं गुणो न सः ।

प्रसादः पदसौकर्यादक्लिष्टत्वान्न भिद्यते ।
श्लेषः कठुविसंधित्वाभावतो नातिरिच्यते ॥
चित्रार्थत्वात्सौक्ष्म्यगुणस्त्वर्थचित्रान्न भिद्यते ।
विस्तराख्यः काव्यलिङ्गालंकारान्नातिरिच्यते ॥
सौकुमार्यं श्रुतिकठुत्वाभावान्नातिरिच्यते ।
गाम्भीर्यं त्वर्थशक्त्युत्थध्वनितो नातिरिच्यते ॥
शृङ्गारे करुणे चापि माधुर्यं स्याद्विशेषतः ।
उदारत्वौजसी प्रोक्ते वीरे वीभत्सरौद्रयोः ॥
ओजोगुणस्तु कथितः शृङ्गारेऽप्यद्भुते क्वचित् ।
अन्ये चतुर्गुणाः सर्वरसेष्वपि यथोचितम् ॥
वस्तुतस्तु मतेऽप्येषां गुणानां घटना स्थितेः ।
समाधिसौक्ष्म्यगाम्भीर्यविस्तराः स्युर्गुणा ध्रुवम् ॥

इति गुणप्रकरणम् ।

अकारादिक्षकारान्ता वर्णाः स्युः पदतां गताः ।
पदानि द्विविधानि स्युस्तिङ्सुबन्तविभेदतः ॥
संचयं तिङ्सुबन्तानां वाक्यमाहुर्विपश्चितः ।
शब्दस्तु त्रिविधः शक्तलक्षकव्यञ्जकात्मना ॥
साक्षात्संकेतितं योऽर्थमभिधत्ते स वाचकः ।
भवेल्लाक्षणिकः शब्दो लक्षणायाः समाश्रयः ।
व्यञ्जकः स भवेच्छब्दो व्यञ्जनायाः समाश्रयः ॥
तदर्थोऽपि त्रिधा शक्यलक्ष्यव्यङ्ग्यविभेदतः ॥
तुर्यस्तात्पर्यविषयो वाक्यार्थ इति तार्किकाः ।
अन्ये शक्यं तमप्याहुरपरे लक्ष्यमूचिरे ॥
वाच्यादयस्त्रयोऽप्यर्था मन्मते व्यञ्जका मताः ।
शब्दवृत्तिरिति प्रोक्ता शब्दव्यापाररूपिणी ॥
अभिधा लक्षणा चैव व्यञ्जना चेति सा त्रिधा ॥

यथाभिधा—

व्यापारः शक्यधीहेतुर्मुख्यः शब्दगतोऽभिधा।
रूढिर्योगो योगरूढिरिति सा त्रिविधा मता॥
रूढिस्त्वखण्डशक्त्यैव स्यादेकार्थाभिधायिता।
पदं रूढं बुधाः प्रोचुस्तादृग्रूढिसमाश्रितम्॥
पीनौ वध्वाः कुचावेतौ मुक्ताहारेण राजतः।
योगोऽवयवशक्त्यैव स्यादेकार्थाभिधायिता।
यौगिकं कथ्यते प्राज्ञैर्योगेन सहितं पदम्॥
रागिन् कान्तापदाघातः कामिनस्तेऽद्य सांप्रतम्॥ ४९॥
योगरूढिस्तु शक्तिभ्यामेकार्थप्रतिपादकः।
ब्रुवते योगरूढं तद्योगरूढियुतं पदम्॥
मृगाक्षी पद्मनाभस्य मन्दिरे वसतान्मम।
वैशेषिकास्तु ब्रुवते पदं यौगिकरूढिकम्।
रूढ्या चैकार्थकं योगेनान्यार्थं चोद्भिदादि तत्॥

अथ लक्षणा—

तात्पर्यविषयीभूतार्थान्वयानुपपत्तितः।
शक्यभिन्नार्थधीहेतुर्व्यापारो लक्षणोच्यते॥
द्विविधा सा रूढिपूर्वा फलपूर्वेति भेदतः।
तत्राद्या व्यङ्ग्यरहिता सव्यङ्ग्या फललक्षणा॥
स्याद्रूढिलक्षणा द्वेधा गौणी शुद्धेति भेदतः।
शक्यसादृश्यसंबन्धरूपा गौणीत्युदीरिता॥
लावण्यनिधिरेवैषा प्रवीणा युवरञ्जने॥ ५०॥
सा शुद्धा सादृश्यभिन्नशक्यसंबन्धरूपिणी।
पुष्पं धनुर्ज्या द्विरेफा स्मरस्तदपि दिग्जयी।
जहती चाप्यजहती जहत्पूर्वा जहत्यपि॥
सारोपा साध्यवसितिरित्यन्या पञ्चधा मता।
सा जहल्लक्षणा यत्र स्वार्थं हित्वान्यवृत्तितः॥

साक्षी मुकुन्दकेलीनां यमुनायामयं व्रजः ॥ ५१ ॥

स्वसिद्धये पराक्षेपे त्वजहल्लक्षणा मता ।
वीक्ष्यानुद्रवतः कुन्तान्द्रवन्तिच्छत्रिणो रणात् ॥
स्वार्थैकदेशवृत्तौ तु जहत्यजहती मता ।

पुष्पितं वनमालोक्य सोऽयं पान्थः स्मराहतः ॥ ५२ ॥

सारोपोपात्तविषयिविषयाभेदबोधिनी ।
सारोपा द्विविधा सा तु गौणी शुद्धेति भेदतः ॥
सादृश्यात्मकसंबन्धरूपा गौणीति कीर्तिता ।
अन्या तदन्यसंबन्धरूपा शुद्धेति कीर्त्यते ॥

मुखेन्दुर्नयनानन्दस्तन्व्या विजयतेतराम् ।

निगीर्य विषयं यत्र विषय्येव निबध्यते ।
तत्र साध्यवसाना स्यात्कविप्रौढोक्तिसंमता ॥

सरोजकाहलीरम्भासैकताकाशभूधरैः ॥ ५३ ॥
शङ्खेन्दुतिमिरैः सृष्टा वल्ली कामिजनोत्सवः ।
संगिरन्ते द्विरेफादौ केचिल्लक्षितलक्षणाम् ॥ ५४ ॥

अत्र व्यङ्ग्यं कचिद्गूढमगूढं च कचिद्भवेत् ।
फले लाक्षणिकस्यास्य व्यापारो व्यञ्जनेष्यते ॥

अथ व्यञ्जना—

यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते ।
फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया ॥
नाभिधा समयाभावाद्धेत्वभावान्न लक्षणा ।
प्रयोजना(न)विशिष्टस्य लक्षणा तु न युज्यते ॥
लक्ष्याभिधेयाद (भ्याम) न्यद्यतो वाच्यं प्रयोजनम् ।
तस्माल्लक्ष्ये प्रतीते तु पावनत्वादिबोधने ॥
अभिधालक्षणाभिन्ना व्यञ्जनैवात्र कारणम् ।
वाच्यलक्ष्यविभिन्नार्थधीकृद्व्यापृतिरञ्जनम् ॥

सामोदसुमनोजातजुष्टो जयति माधवः ।

अत्रार्थप्रत्ययद्वारेणोपमायाश्च या मतिः ।
अभिधालक्षणाभिन्ना व्यञ्जनैवात्र कारणम् ॥
अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।
संयोगाद्यैर्विवक्ष्यार्थधीकृद्व्यापृतिरञ्जनम् ॥
संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थानेकतायां चेद्विशेषस्मृतिहेतवः ॥
संयोगस्तु स्ववाच्यैकनिष्ठार्थान्तरसंनिधिः ।
पुष्णयत्यधिकां लक्ष्मीं शङ्खचक्रधरो हरिः ॥ ५५ ॥
विप्रयोगस्तु संयोगाभाव एव निगद्यते ॥
अशङ्खचक्रः स हरिरपिनाको भवो भवान् ।
साहचर्यं स्ववाच्यैकवस्तुनः सहचारिता ।
वन्दारुजनमन्दारौ रामकृष्णौ नमाम्यहम् ॥ ५६ ॥
सहानवस्थितिर्वध्यहन्तृत्वं च विरोधिता ॥
दिनं निशां च संयुध्य रामोऽजैषीद्दशाननम् ।
अर्थः प्रयोजनं स्थाणुं संसारच्छित्तये भजे ॥
विदुः प्रकरणं वक्तृश्रोतृबुद्धिस्थितं बुधाः ।
जानाति सकलं देवः प्रश्नोऽयं वितथोऽधुना ॥
लिङ्गं स्ववाच्यान्तरेभ्यो व्यावृत्तो धर्म इष्यते ।
जय्यो जगति केनैष कुपितो मकरध्वजः ॥
सामानाधिकरण्यं यन्नियतार्थपदे हि तत् ।
शब्दान्तरस्य सांनिध्यं देवोऽव्यात्त्रिपुराहितः ॥
सामर्थ्यं स्यात्कारणत्वं मत्तोऽयं मधुना पिकः ।
औचित्यन्वययोग्यत्वं गच्छत्यारुह्य सैन्धवम् ॥
देशः पुरादी राजात्र नगरे राजते मुहुः ।
कालो निशादिस्तामस्यां चित्रभानुर्विराजते ॥

पुंलिङ्गादिर्भवेद्व्यक्तिर्मित्रो भात्युदयं गतः।
उदात्तादिः स्वरादिः स्यादिन्द्रशत्रो इति श्रुतौ॥
यतोऽर्थधियमुत्पाद्य शब्दोऽर्थान्तरबुद्धिकृत्।
ततोऽर्थो व्यञ्जकः शब्दसहकारितया मतः॥
वाच्यलक्ष्यव्यङ्ग्यभेदादर्था ये त्रिविधा मताः।
तेषामपि व्यञ्जकत्वमधुना प्रतिपाद्यते॥
वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसंनिधेः।
प्रस्तावदेशकालादेर्वैशिष्ट्यात्प्रतिभाजुषाम्॥
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यञ्जनैव सा।
अस्तंगतोऽद्य सविता पथिक क्व प्रयास्यसि॥
इत्यादौ वक्तृवैशिष्ट्यज्ञानाद्रत्यभिलाषधीः।
प्रातश्चेन्नाथ को दोषः श्रान्तोऽसि स्वपिहि क्षणम्॥
अत्र बोद्धव्यवैशिष्ट्याद्वक्तृकोपः प्रतीयते।
सखि श्रुत्वापि मामेवं नानुतापमुपैति सः॥
इत्यादौ काकुवैशिष्ट्यज्ञानाद्व्यङ्ग्यार्थनिश्चयः।
स्वप्नेऽपि नास्मरः प्राङ् मां भाग्येनाद्यागतोऽसि मे॥
इत्यादौ वाक्यवैशिष्ट्यज्ञानाद्व्यङ्ग्यार्थनिश्चयः।
शून्या प्रपेयमेकाकिन्यस्मि पान्थास्यतां क्षणम्।
इत्यादौ वाच्यवैशिष्ट्यज्ञानाद्व्यङ्ग्यार्थनिश्चयः।
एकाकिन्येव यास्यामि जलार्थं कथमापगाम्॥
इत्यादिषु व्यङ्ग्यबुद्धिर्वैशिष्ट्यादन्यसंनिधेः।
वयस्ये प्रतिवेशिन्याः पतिरद्य समागतः॥
अत्र प्रस्ताववैशिष्ट्यज्ञानाद्व्यङ्ग्यार्थनिश्चयः।
सख्यो दूरं गता गन्तुमक्षमाहमिह स्थिता॥
इत्यादौ देशवैशिष्ट्यज्ञानाद्व्यङ्ग्यार्थधीर्मता।
गृहकृत्यव्यापृताया विश्रामोऽद्यैव मे सखि॥
इत्यादौ कालवैशिष्ट्यज्ञानाद्व्यङ्ग्यार्थनिश्चयः।

फलानि दिश भव्यानि निवेश्य मणिबन्धने ॥
बिम्बस्य चुम्बनेनैव सखि लालय मा शुकम्।
इत्यादिषु च लक्ष्यस्य व्यञ्जकत्वं प्रकीर्तितम् ॥
गच्छ गच्छसि चेत्कान्त वरस्तत्रैव मे भव।
इत्यादौ व्यञ्जकत्वं च व्यङ्ग्यार्थस्य भवेद्ध्रुवम् ॥
शब्दप्रमाणवेद्योऽर्थो व्यनक्त्यर्थान्तरं यतः।
अर्थस्य व्यञ्जकत्वे तच्छब्दस्य सहकारिता ॥

इति शब्दार्थप्रकरणम्।

सा शय्या कीर्तिता मैत्री या पदानां परस्परम्।
दाता जेता रणे त्राता भीतानां भाति भूपतिः ॥

इति शय्या।

अर्थगम्भीरिमा पाकः स द्वेधा कविसंमतः।
द्राक्षापाको नारिकेलपाकश्च प्रस्फुटान्तरौ ॥
द्राक्षापाकः स कथितो बहिरन्तःस्फुरद्रसः।
अपाङ्गान्प्रेमवाराशितरङ्गान्किरति प्रिया ॥
स नारिकेलपाकः स्यादन्तर्गूढरसोदयः ॥

प्राचीनम्—

गाम्भीर्यातिशयेन यस्य जगतां नेत्राणि मानं गता
पत्रं यस्य नवीनतां भजति यत्पद्मेयमासीज्जगत्।
राजत्केसरितं समुद्रममलं यद्वत्समव्यञ्जगुः
शेते यो हि विभावरीशरुचिरः कुर्याच्छमभ्रं शिवः ॥
मधुक्षीरादिपाकान्यप्येवमूह्यानि सूरिभिः ॥

इति पाकप्रकरणम्।

पात्रे नृणामनीचानां संस्कृतं परिकीर्तितम्।
लिङ्गिनीमन्त्रिजावेश्यादेवीनां च क्वचित्क्वचित् ॥
स्त्रीणां प्रायः शूरसेनी प्राकृतं मागधी तथा।
तथैव नीचपात्राणां तत्तद्देशीयभाषणम् ॥

यथोचितं राक्षसानां पैशाची परिकीर्तिता ।
अवरैर्लिङ्गिदेवर्षिविप्रामात्याग्रजाः सुधीः ॥
भगवच्छब्दवाच्याः स्युः सूत्रिणार्येति सा नटी ।
तेनानुगो मारिषश्च पारिपार्श्वक इत्यपि ॥
नट्या सूत्री त्वार्यपुत्रस्तथार्यश्चेति कीर्त्यते ।
अनुगेन स भावः स्यात्पूज्यैः शिष्यात्मजानुजाः ॥
वत्साः सूतेन चायुष्मान्रथी शिष्यात्मजानुजैः ।
पूज्यस्तु सुगृहीतश्च तातश्चेत्यपि कीर्त्यते ॥
नृपेण गणिका नाम्नानुचरै रज्जुकेति सा ।
सर्वैस्तु युवराजोऽपि कुमारो भर्तृदारकः ॥
भृत्यैर्भट्टारको देवो नृपो विप्रैस्तु नामतः ।
विदूषकेण राजेति वयस्य इति वा नृपः ॥
ऋषिभिः स च राजा स्यादधमैर्भट्ट इत्यपि ।
नृपेण महिषी देवी तदन्या चैव भोगिनी ॥
अपरैर्भट्टिनी सैव नीचैर्गोस्वामिनीति सा ।
अब्रह्मण्यमवध्योक्तौ माता त्वम्बेति कीर्त्यते ॥
भगिनीपतिरावुत्तो राजशालस्तु राष्ट्रियः ।
ज्येष्ठा तु भगिनी चात्ताप्यन्तिका चात्तिकेति वा ।
नीचासंबोधने हण्डे चेटीं हञ्जे सखीं हला ॥

इति रूपकभाषानिबन्धनप्रकरणम् ।

व्यभिचारिरसस्थायिभावानां शब्दवाच्यता ।
कष्टकल्पनया व्यक्तिरनुभावविभावयोः ॥
प्रतिकूलविभावस्य ग्रहो दीप्तिः पुनः पुनः ।
अकाण्डप्रथनं चैव रसच्छेदोऽङ्गविस्तृतिः ॥
तथाङ्ग्यननुसंधानं प्रकृतीनां विपर्ययः ।
तथानङ्गाभिधानं च रसदोषास्त्रयोदश ॥
दृष्टे प्रियेऽस्या लज्जाभूद्रसतां च ययौ रतिः ।

व्यभिचारी रसः स्थायी त्रयो वाच्याः क्रमादिह ॥
लीलावनेऽस्य तन्वङ्गी याता नयनगोचरम् ।
इत्यादावनुभावस्य व्यक्तिः स्यात्कृष्टकल्पिता ॥
उत्कम्पतेतरामेषा मीलयत्यपि लोचने ।
भयानकसमत्वात्स्याद्विभावस्येह कष्टता ॥
व्याघ्रो व्यात्तमुखो वर्त्मन्यास्ते मुग्धे क्व यास्यसि ।
इत्यादौ प्रतिकूलस्य विभावस्य भवेद्ग्रहः ॥
ज्ञेयः पुनः पुनर्दीप्ती रतिप्रलपितादिषु ।
शृङ्गारवर्णने भानुमत्या दुर्योधनस्य च ॥
अकाण्डप्रथनं ज्ञेयं वेणीसंहारनाटके ।
भार्गवेण समं काष्ठां परां वीररसे गते ॥
कङ्कणोन्मोचनायाहं गच्छामीत्युदिते गुरोः ।
रसच्छेदो महावीरचरितेऽकाण्ड इष्यते ॥
अप्रधानस्य बहुधा हयग्रीवस्य वर्णने ।
हयग्रीववधे काव्ये विज्ञेयाङ्गस्य विस्तृतिः ॥
**रसान्तरेणान्तरितो नैरन्तर्येण यो रसः ।**
**तत्राङ्ग्यननुसंधानं विद्वद्भिः परिकीर्त्यते ॥**
यथा जीमूतवाहस्य शान्तस्याद्भुतमन्तरे ।
निवेश्य शृङ्गाररसो नागानन्दे प्रकाशितः ॥
**अदिव्यादिषु दिव्यादिगुणानां परिकीर्तने ।**
**विद्वद्भिस्तत्र विज्ञातः प्रकृतीनां विपर्ययः ॥**
**प्रशंसनं कृतं राज्ञा बन्दिना वर्णितस्य यत् ।**
**तदनङ्गाभिधानं स्यात्सट्टके प्रथमाङ्कके ॥**
**न दोषः स्वपदेनोक्तावपि संचारिणां क्वचित् ।**
श्रुतप्रियागतिर्बाला तथाजनि समुत्सुका ॥
**आश्रयैक्ये विरुद्धो यः स कार्यो भिन्नसंश्रयः ।**
धनुर्धरं त्वामालोक्य पलायन्ते रणात्परे ॥

**स्मर्यमाणो विरुद्धोऽपि रसो नैव विदुष्यति ।**

सीतां स्मृत्वा सखीमग्रे वीक्ष्य रक्षोवरूथिनीम् ।
शरीररुधिरासिक्तं रामो जग्राह कार्मुकम् ॥

**विवक्षितो यः साम्येन विरुद्धः सोऽप्यदोषभाक् ॥**

नखैः प्रियाणामसिभिर्वीराणां च विदारणम् ।
शोभामङ्गेषु पुष्णाति सखि सातिशयां मुहुः ॥

**रसावन्याङ्गतां प्राप्तौ विरुद्धौ च न दुष्यतः ।**

आलिप्तवपुषो वीरा लोहितैर्हरिचन्दनैः ।
अलंकृता इवाभान्ति विवोढुं विजयश्रियम् ॥

**भावोदयः स्यादुत्पत्तौ व्यङ्ग्येन व्यभिचारिणः ॥**

किमिदं कुचयोरालीत्युक्त्वा मुग्धा नतानना ॥

**भावसंधिस्तु भावानां तुल्यानां व्यङ्ग्यता यदि ।**

सीताकपोलमुकुरे पश्यन्नुत्पुलकं मुखम् ।
रक्षःकलकलं शृण्वञ्जटां बध्नाति राघवः ॥

**पूर्वपूर्वोपमर्दे तु तेषां शवलता मता ॥**

फलं किं वन्धुसंक्षोभात्कातर्यं किं वदेज्जनः ।
का हानिः किंवदन्त्या मे द्रष्टव्या द्रौपदी कथम् ॥

**मुख्ये रसेऽपि तेऽङ्गित्वं प्राप्नुवन्ति कदाचन ।**
**यथा च राजानुगता भृत्याः परिणयोन्मुखाः ॥**

**अनेकेषां रसानां चेद्देशकालादिभेदतः ।**
**मेलनेऽङ्गतया तत्र रससंकर इष्यते ॥**

(प्राचीनम्—)

भग्नं कामरिपोर्धनुः परिहृतं राज्यं स्थितं काननं
　　निर्भिन्नस्त्रिशिराः खरस्य पिशितं स्पृष्टं कपिर्लालितः ।
लङ्केशो दयितश्चिराय रुदितं लङ्कावधूनां श्रुतं
　　नीता सद्म विदेहभूस्तदखिलं रामस्य लोकोत्तरम् ॥

कथानुग्रहयोगाच्च विवक्षावशतः कवेः।
अन्योन्यजन्यजनका रसा भावा भवन्त्यमी॥

(प्राचीनम्—)

युधि कुपितकृतान्तस्फूर्तिमानाविलाक्षो
दशदिशि दशकण्ठस्त्यक्तवान्वारिदास्त्रम्।
तडिति जनकपुत्र्याः साम्यमालोकमान-
स्त्यजति न पवनास्त्रं राघवः खिन्नपाणिः॥

अलंकारे च रुचिरे चित्तविश्रामकारिणि।
अलंकारस्य मुख्यत्वं गौणत्वं रसभावयोः॥
अत्यन्तसुकुमारौ तु शृङ्गारकरुणौ मतौ।
हास्याद्भुतावुभौ किंचित्सुकुमारौ प्रकीर्तितौ॥
अत्युद्धतरसौ रौद्रबीभत्सौ परिकीर्तितौ।
ईषत्प्रौढौ समाख्यातौ रसौ वीरभयानकौ॥

इति रसदोषादोषप्रकरणम्।

काव्यं हि यशसेऽर्थाय शिवेतरनिवृत्तये।
कान्तावदुपदेशाय परनिर्वृतये क्षणात्॥
सालंकारगुणौ काव्यं शब्दार्थौ दोषवर्जितौ।
तथा कवीनां समयानुरोधेन निबन्धितम्॥
ईदृशं द्विविधं काव्यं श्राव्यदृश्यविभेदतः।
श्राव्यं तु त्रिविधं ज्ञेयं गद्यपद्योभयात्मना॥
अपादः पदसंघातो गद्यं पद्यं चतुष्पदम्।
गद्यपद्यात्मकं काव्यं चम्पूरित्यभिधीयते॥
दृश्यं तु दशधा प्रोक्तं नाटकादिविभेदतः।
सर्वध्वनिर्गुणीभूतव्यङ्ग्यं चित्रमिति त्रिधा॥
वाच्यातिशायि व्यङ्ग्यं यत्काव्यं ध्वनिरितीर्यते।
काव्यं तु कथितं व्यङ्ग्ये वाच्यादनतिशायिनि॥

गुणीभूतव्यङ्ग्यमिति स्याद्व्यङ्ग्यस्याप्रधानतः ।
अव्यङ्ग्यमपि यच्चारु तत्काव्यं चित्रमिष्यते ॥
शब्दचित्रं चार्थचित्रमुभयं चेति तत्त्रिधा ।
सोदाहृदय एतेषां भेदाः पूर्वं प्रकाशिताः ॥
शरीरं तस्य शब्दार्थौ जीवितं व्यङ्ग्यवैभवम् ।
हारादिवदलंकारास्तेऽनुप्रासोपमादयः ॥
शौर्यादय इव प्रोक्ताः श्लेषकान्त्यादयो गुणाः ।
आत्मोत्कर्षावहास्तत्र स्वभावा इव रीतयः ॥
शोभामाहार्यकीं प्राप्ता वृत्तयो वृत्तयो यथा ।
पदानुगुण्यविश्रान्तिः शय्या शय्येव संमता ॥
रसास्वादप्रभेदाः स्युः पाकाः पाका इव स्थिताः ।
प्रख्याता लोकवदियं सामग्री काव्यसंपदः ॥
लक्ष्यलक्षणसंयुक्ता इमे पूर्वं प्रकीर्तिताः ।
महाकाव्यं चोपकाव्यमिति तद्द्विविधं पुनः ॥
नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनैः ।
उद्यानसलिलक्रीडामधुपानरतोत्सवैः ॥
विप्रलम्भैर्विवाहैश्च कुमारोदयवर्णनैः ।
मन्त्रद्यूतप्रयाणादिनायकाभ्युदयैरपि ॥
एतैरुपनिबद्धं यत्तन्महाकाव्यमिष्यते ।
एषामष्टादशानां यैः कैश्चिन्न्यूनमपीष्यते ॥
सर्गबन्धो महाकाव्यमिति केचित्प्रचक्षते ।
असर्गबन्धमपि च महाकाव्यमितीष्यते ॥
गीततालानुबद्धं यदुपकाव्यमितीर्यते ।
उपकाव्यं तु बहुधा वक्ष्ये तानि च कानिचित् ॥

(आख्यायिका—)

कविचारित्रसहितं नरपालकथान्वितम् ।
विचित्रवर्णरचनासमासैस्तु मनोहरम् ॥

उच्छ्वासान्ते वक्त्रयुतं रचितापरवक्त्रकम् ।
उच्छ्वासादौ सपर्याङ्गमिदमाख्यायिकाभिधम् ॥

(कथा—)

श्लोकैः स्ववंशं संक्षेपात्कविर्यत्र प्रशंसति ।
मुख्यार्थस्यावताराय भवेत्तत्र कथान्तरम् ॥
परिच्छेदो न यत्र स्याद्भवेत्त्वालम्भकः क्वचित् ।
सा कथा नाम तद्गर्भे निबध्नीयाच्चतुष्पदीम् ॥

(उदाहरणम्—)

येन केनापि तालेन गद्यपद्यसमन्वितम् ।
जयेत्युपक्रमं मालिन्यादिप्रासविचित्रितम् ।
तदुदाहरणं नाम्ना विभक्त्यष्टाङ्गसंयुतम् ॥

(चक्रवालकम्—)

संबोधनविभक्त्या यत्प्रचुरं पद्यपूर्वकम् ।
विमुक्तपुनराकृष्टशब्दं स्याच्चक्रवालकम् ॥

(भोगावली—)

आद्यन्तपद्यसंयुक्ता संस्कृतप्राकृतात्मिका ।
अष्टभिर्वा चतुर्भिर्वा वाक्यैः स्कन्धसमन्विता ॥
प्रतिस्कन्धं भिन्नवाक्यरीतिर्देवनृपोचिता ।
सर्वतो देवशब्दादिरेष भोगावली मता ॥

(विरुदावली—)

वर्ण्यमानाङ्कविरुदवर्णनप्रचुरोज्ज्वला ।
वाक्याडम्बरसंयुक्ता कथिता विरुदावली ॥

(तारावली—)

ताराणां संख्यया पद्यैर्युक्ता तारावली मता ।

(विश्वावली—)

विश्वेषां संख्यया पद्यैर्युक्ता विश्वावली मता ।

(रत्नावली—)

रत्नानां संख्यया पद्यैर्युक्ता रत्नावली मता ।

(पञ्चाननावली—)

पद्यैश्च पञ्चभिर्युक्ता प्रोक्ता पञ्चाननावली ।
आख्यायिकायां शृङ्गारेऽप्युद्धृता रचना मता ॥
कथायां नाटकादौ च न रौद्रेऽप्यधिकोद्धता ॥
अन्येषु च प्रभेदेषु रचना स्याद्यथोचितम् ॥

इति काव्यप्रकरणम् ।

अथात्र वर्ण्यावर्ण्यानि प्रबन्धेषु ब्रुवे स्फुटम् ।
वर्ण्यो मुख्यतया नेता लोकोत्तरगुणोत्तरः ॥
तेन कर्तुः प्रबन्धस्य प्रतिष्ठा महती भवेत् ।
कुलाचारयशःशौर्यत्यागशीलादिवर्णनम् ॥
क्रियते नायकस्यैव यत्तदेवातिसंमतम् ।
अथ वा तद्विरुद्धस्य वर्णयित्वा बहून्गुणान् ॥
तज्जयान्नायकोत्कर्षवर्णनं च मतं क्वचित् ।
घटते नेतरि द्वेधा स्वतःसिद्धेनं कल्पिते ॥
नृपे कीर्तिप्रजारागप्रतापाज्ञानयक्षमाः ।
विवेकारिपुरीदाहधर्मसंग्रामपूर्वकाः ॥
कुमारे खुरलीशस्त्रबलशास्त्रकलादयः ।
महिष्यां रूपलावण्यत्रपाशृङ्गारमन्मथाः ॥
चातुर्यप्रेमदाक्षिण्यशीलमानमुखादयः ।
मन्त्री भक्तः स्वदेशीयोऽनुद्धतो बुद्धिमान्क्षमी ॥
सेनाधिपः स्वामिभक्तो धैर्यवान्विजयी रणे ।
पुर्यां प्रसादपरिखातोरणाध्वप्रपाध्वजाः ॥
वप्राट्टारामकुलटावेश्यावापीसतीमुखाः ।
देशे द्रव्यजनाधिक्यनदीमातृकतादयः ॥

ग्रामे धान्यसरःक्षेत्रारघट्टाः पादपादयः।
अब्धौ यादोगजद्वीपरत्नोर्म्यद्रीन्दुवृद्धयः॥
विद्रुट्पोतौर्वगाम्भीर्यध्वनिनद्यागमादयः।
उद्याने फलपुष्पद्रुलताक्रीडासरोऽद्रयः॥
पिकालिकेकिहरिणहंसचक्रध्वजादयः।
कासारे लहरीकञ्जचक्रहंसमधुव्रताः॥
तीरारामवधूकेलीभ्रमिपान्थझषादयः।
पर्वतेऽप्यौषधीशृङ्गवनकिंनरनिर्झराः॥
धातुवंशगुहारत्नाधित्यकोऽपत्यकादयः।
वने सर्पवराहेभोलूकभिल्लदवादयः॥
मन्त्रे स्थैर्योपायसिद्धिषाड्गुण्योदयचिन्तनम्।
पञ्चाङ्गशक्तिस्वौन्नत्यनिर्जनस्थानपूर्वकाः॥
दूते दाक्षिण्यभीरुत्वं शत्रुक्षोभकरी क्रिया।
स्वस्वामिविक्रमौन्नत्यवाक्यधार्ष्ट्यादयो मताः।
रणे खड्गरजस्तूर्यशरवृष्टिपलाद्रयः॥
छिन्नच्छत्रध्वजा रक्तनदीकोलाहलादयः।
अश्वे वेगित्वसज्जातिखुरोत्खातरजोमुखाः॥
मृगयायां नीलवेषो वागुरामृगसाध्वसम्।
भषकत्वर्थसंचारो भट्टहिक्कात्वरादयः॥
विरहे जागरश्वासनिशादैर्घ्यकृशाङ्गताः।
संतापचिन्तामालिन्य मौनरक्ताक्षतादयः॥
सुरते स्वेदकणिका सीत्कारो भूषणच्युतिः।
मञ्जीरकङ्कणारावनखदन्तक्षतादयः॥
यात्रायां दुन्दुभिध्वानकरभध्वजवेसराः।
शकटोक्षच्छत्रधूलिपृथ्वीकम्पबलादयः॥
गजे तु कर्णचापल्यमुच्चत्वं व्यूहभेदिता।
सिन्दूरचित्रयोधित्वकुम्भमुक्ताफलादयः॥

सुरापाने गतिर्वचःस्खलनं नयनभ्रमः ।
लज्जामानच्युतिश्चित्तभ्रमरक्ताक्षतादयः ॥
सूर्योदयेऽम्भोजचक्रनेत्रपान्थविकासनम् ।
रागो भेन्दुतमोघूककुवचोरविषादनम् ॥
चन्द्रोदये तु विरहिचक्राब्जकुलटार्तयः ।
अब्धिदम्पतिचन्द्राश्मचकोरप्रीतिपूर्वकाः ॥
वसन्ते पिकगानाम्रमञ्जरीमन्दमारुताः ।
पुष्पाणि द्रुदलोद्भेदपलाशभ्रमरादयः ॥
ग्रीष्मे पाटलमल्लीतापसरःपथिकशोषाम्रफलपाकाः ।
मृगतृष्णाल्पसमीरः कान्ता पानीयशालिका मुख्याः ॥
वर्षासु मेघहलिकेतकनिम्नगानां
झञ्झानिलस्य शिखिजातिकदम्बकानाम् ।
प्रीतिश्च हंसगमनं नलिनीलतानां
पत्रोद्भवोऽर्कलतिकादलपातनाद्याः ॥
शरदि सूर्यसुधाकरपाटवं विमलताम्भसि हंसवृषस्मयाः ।
कमलशारदसैकतविस्तृतिः सुशिखिपक्षमदापगमादयः ॥
हेमन्ते रजनीदैर्घ्यं नलिनीकुसुमक्षतिः ।
दिनाल्पत्वं हिमप्रौढिवकानन्दयवोद्भवाः ॥
शिशिरे वेणुकुन्दाब्जदाहः शिखिरतोत्सवाः ।
स्वयंवरे सतीपूजावाद्यघोषनृपागमाः ॥
राजपुत्र्या नृपाकारान्वयचेष्टाप्रकाशनम् ।
विवाहे मङ्गलस्नानं भूषणं कामिनीरवः ।
वेदी संगीततारेक्षालाजाहोमद्विजादयः ॥
वनकेलौ च कुसुमावचयः कुसुमार्पणम् ।
दयिते गोत्रविभ्रान्तिसपक्षेर्ष्योक्तिपूर्वकाः ॥
जलकेलौ जलक्षोभश्चक्रहंसापसर्पणम् ।
पद्मग्लानिपयोबिन्दुहृग्रागाभूषणच्युतिः ॥

श्वेतास्त्वैरावतः शंभुः कीर्तिश्चन्द्रः शरद्धनः ।
प्रासादसौधनगरमन्दारद्रुहिमाद्रयः ॥
सूर्येन्दुकान्तकर्पूरसुधांशुकरका हिमम् ।
पिण्डीरोच्चैःश्रवो ज्योत्स्नाश्रुरम्भाभसचन्दनम् ॥
निर्मोकहारोर्णनाभतत्त्वसत्त्वास्थिशर्कराः ।
शेषाभ्रकसुधागङ्गागजदन्ताम्बुचामरम् ॥
रम्भागर्भः पुण्डरीकमृणालसिकताबकाः ।
हंससिंहध्वजच्छत्रकेतकीगर्भनिर्झराः ॥
लोध्रमुक्तापुष्पतारचूर्णशुक्तिकदर्पिकाः ।
कैलासकाशकार्पासहासहास्योशनःकृतम् ॥
नारदः पारदः पुण्यवसनस्फटिकादयः ।
श्यामास्त्वद्रिद्रुकालीयवनभैरवराक्षसाः ॥
शिवकण्ठः शनि शीरी कलिचन्द्रकराहवः ।
वादरायणवस्त्राभ्रद्रौपदीकज्जलार्जुनाः ॥
कालीकोलयमाः केशकस्तूरीयमुनागजाः ।
विषाकाशकुहूपापरसविष्णुतमोनिशाः ॥
मषीपङ्कमदाम्भोधितालतापिच्छकोकिलाः ।
गोलाङ्गूलास्यगुञ्जास्यधूमशृङ्गारवल्लयः ॥
केकितेजनबर्हालिखलचित्तकनीनिकाः ।
तिलेन्दीवरदुष्कीर्तिमुस्तानीलीभयानकाः ॥
भिल्लश्छाया मृगीनेत्रं शस्त्रं कान्तादृगादयः ।
नीलाः स्युः शादशैवालदूर्वावंशाङ्कुराः शुकः ।
बीभत्ससूर्यतुरगाः पर्णं मरकतादयः ॥
रक्ताः स्युः सूर्यगोकर्णगुन्द्रखद्योतयावकाः ।
ताम्रकुङ्कुमसिन्दूरदृग्बिम्बाधरधातवः ॥
विद्युत्पद्मकजिह्वास्रक्पापलकिंशुकाः ।
अम्भोजकुक्कुटशिखाहिङ्गुलाशोकपाटलाः ॥

कुसुम्भो हंसचञ्चवञ्जीनिम्बकिंपाकपल्लवौ ।
त्रेता नखक्षतं रौद्रः शुकमर्कटयोर्मुखम् ॥
प्रपातश्च चकोराहिभुक्कपोतदृगादयः ।
पीताः स्युर्द्वीपरब्रह्मजीवशक्रमनःशिलाः ॥
गौरीगोमूत्रगरुडमण्डूकेश्वरदृग्जटाः ।
मधु वीराङ्कतौ कोको मर्कटः शारिकामुखम् ॥
कर्णिकारः शालिदीपरोचनाजांशुकादयः (?) ।
धूसराः करुणो धूलिलूताकाकखरादयः ॥
संपूर्णवृत्तास्तिलकचक्रपद्मेन्दुदर्पणाः ।
मृदङ्गपुटशाणास्यारघट्टघुटिकादयः ॥
अल्पवृत्तास्तारलता गृहपूपककच्छपाः ।
आलवासमहीकंसनखचर्मादयो मताः ॥
त्रिकोणा वज्रशृङ्गाटशकटा वह्निमण्डलम् ।
वक्राः किंशुकभालभ्रूविद्युत्कुद्दालचन्द्रकाः ॥
नखाङ्कांशुकबालेन्दुशुकास्येन्द्रधनुःफणाः ।
कटाक्षदात्रेभदन्तपुरोहितकरादयः ॥
तीक्ष्णानि दुर्वचोवह्निकटाक्षनखरादयः ।
गुरवः सन्मनःश्रोणिकपाटस्तनबुद्धयः ॥
सुखदाः सुस्पृहा लब्धिर्वियुक्तप्रियसंगमः ।
दातृस्वातन्त्र्यपुत्राप्तिविद्यामित्रेन्दुवृद्धयः ॥
दुःखदाः पारतन्त्र्याधिव्याधिमानच्युतिद्विषः ।
कुभार्याश्लेषकुग्रामवासकुस्वामिसेवनम् ॥
कन्याबहुत्वं वार्धि(र्ध)क्यं निवासः परवेश्मनि ।
स्थिराः स्युर्वीरधीराजौ धर्माधर्मौ सतां मनः ॥
अस्थिराः कामिनीराजप्रसादस्वप्नदुर्जनम् ।
मन्दगाश्च शनिज्ञानिकान्तामातङ्गमाहिषाः ॥

क्रूरस्वराः काकवृकवराहोष्ट्राश्च गर्दभाः ।
बलिष्ठा विष्णुगरुडसत्प्रतिज्ञा यमादयः ॥
सुरूपाः कृष्णनकुलनलकूबरमन्मथाः ।
दुःसहाः कामतापादिप्रतापा दुर्वचस्तपः ॥
मधुराः स्युर्विदग्धोक्तिकान्ताधरशशित्विषः ।
इत्थमेते वर्णनीयाः प्रबन्धेषु यथोचितम् ॥
अथ वक्ष्यामि सर्वेषां कवीनां समयं स्फुटम् ।
सतोऽपि चानिबन्धः स्यादसतोऽपि निबन्धनम् ॥
नियमेन निबन्धश्च विकल्पेन निबन्धनम् ।
एवं कवीनां समयश्चतुर्धा परिकीर्तितः ॥
वस्तुनः सतोऽप्यनिबन्धनं यथा—
अयने चन्द्रिकासंपत्पक्षयोः शुक्लकृष्णयोः ।
वसन्ते मालतीपुष्पं कामिदन्तेषु रक्तता ॥
फलपुष्पे चन्दने च फलं चाशोकपादपे ।
दिवा विकासः कुमुदे वर्षाकाले च मल्लिका ।
न वर्णयेत्सतोऽप्येतान्प्रबन्धेषु कदाचन ॥
अथासतो वस्तुनो निबन्धनं निरूप्यते—
हंसे कीर्तौ च शुभ्रत्वं दार्ढ्यं दुष्कीर्तिपापयोः ।
अञ्जलिग्राह्यता कुम्भपूर्यत्वं शशिदीधितेः ॥
रत्नानि यत्र तत्राद्रौ कमलानि नदीष्वपि ।
मन्दाकिन्यां जलेभादिहंसाः सर्वजलाशये ॥
ज्योत्स्नापत्नं चकोराणां प्रतापे रक्ततोष्णते ।
ध्वान्तस्य मुष्टिग्राह्यत्वं लेपनं सूचिभेद्यता ॥
विश्लेषः कोकयो रात्र्यां रक्तत्वं क्रोधरागयोः ।
कान्तामध्येऽप्यदृश्यत्वं समुद्राणां चतुर्थता ॥

नियमेन निबन्धनं यथा—

बहुकालस्थितस्यापि शिवचन्द्रस्य बालता ।
मनुष्या मौलितो वर्ण्या देवाश्चरणतस्तथा ॥

भूर्जत्वग्घिमवत्येव मलयेष्वेव चन्दनम् ।
रक्तत्वं रत्नबन्धूकबिम्बाम्भोजविवस्वताम् ॥
कृष्णत्वं केशकामालिपिककाकपयोमुचाम् ।
सामान्यशौक्ल्यं छत्राम्भः पताकापुष्पवाससाम् ॥
वसन्त एव वर्ण्यं स्यात्परपुष्टस्य कूजितम् ।
वर्षास्वेव मयूराणां रुतं नृत्यं च वर्णयेत् ॥
लज्जाकोपायशोनाशरोषाक्रन्दास्यकृष्णताः ।
रागपाण्डुरतादैन्यविषपानतपोजपाः ॥
दुःखद्वेषाभिचारेर्ष्यासहनोद्ग्रीविकादयः ।
वर्णनीया जितस्यैते पराभवसमुद्भवाः ॥

विकल्पेन निबन्धनं यथा—

कृष्णत्वं हरितत्वं वा कमलासंपदोर्मतम् ।
पीतत्वं रक्तता वाग्नौ परागे स्वर्णविद्युतोः ॥
दानवासुरदैत्यानामैक्यमेवातिसंमतम् ।
कटाक्षे शौक्ल्यकृष्णत्वे लोध्रे लोहितपाटलौ ॥
चन्द्रे शशमृगौ कामध्वजे मकररोहितौ ।
एवं कवीनां समयो दिङ्मात्रं परिकीर्तितः ॥

इति वर्ण्यावर्ण्यप्रकरणम् ।

पदार्थस्तु द्विधा प्रोक्तो भावाभावविभेदतः ।
भावश्चतुर्विधो जातिगुणद्रव्यक्रियात्मना ॥
जातिस्तु द्विविधा प्रोक्ता सामान्योपाधिभेदतः ।
सामान्यं तु घटत्वादिरुपाधिश्चन्द्रतादिकः ॥
गुणास्त्वनेके कथिता गन्धरूपरसादयः ।
द्रव्यं तु दशधा पृथ्वीजलतेजःप्रभञ्जनः ॥
तमो व्योमात्मदिक्कालमनांसीति विभेदतः ।
कर्तृत्वं च क्रिया सैकाभावस्तु त्रिविधो मतः ॥

प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव इत्यपि।
अभावस्य गुणत्वं तु केचिदूचुर्विपश्चितः॥
संबन्धो धर्मिरूपत्वात्पदार्थो न पृथग्भवेत्।
तस्मादेव न भेदोऽपि स्युर्द्रव्याणीन्द्रियाण्यपि॥
नित्यजातिस्तु सामान्यमनित्योपाधिरुच्यते।
केचिद्घटादिशब्दानां जातिवाचकतां विदुः॥
विष्णुव्योमादिशब्दानां व्यक्तिवाचकतामपि।
केचिद्विदुर्घटादींश्च जातिमद्द्रव्यवाचकान्॥
क्रियावाचकशब्दाः स्युरेधते कुरुते मुखाः।
अभाववाचकाः शब्दा नानोमानाशपूर्वकाः॥

इति पदार्थनिरूपणम्।

प्राचीनानां नवीनानां मतान्यालोच्य शक्तितः।
रचितं बालबोधाय तोषाय विदुषामपि॥
चम्पूप्रबन्धं मन्दारमरन्दं विबुधालयः।
स्वादं स्वादं विमात्सर्यं भवन्त्वानन्दतुन्दिलाः॥
जलजनिजनिजायाप्रेमपाकेन गोपी-
जनमनसिजकेलीलम्पटेऽलम्पटेन।
गुहपुरनिलयेन प्रोद्धृतः शेषबिन्दुः
सुरकुसुममरन्दे चारुचम्पूप्रबन्धे॥

श्रीमद्घटिकाशतशतविहिताष्टभाषासरसकविताचरणनिपुणस्य वासुदेवयोगीश्वरस्यान्तेवास्यन्यतमस्य गुहपुरवासशर्मणः कृष्णशर्मणः कवेः कृतौ मन्दारमरन्दे चम्पूप्रबन्धे शेषबिन्दुरेकादशः समाप्तिमगमत्॥

